स्वप्राणेभ्योऽपि यः प्रेयान् तस्मै[1] प्रकाशयेत् ।
गोप्याद् गोप्यतरं चेति भूयो भूयो वदाम्यहम् ॥ ८

सप्तकोटिमहामन्त्रा यद्येकस्मै प्रकाशिताः ।
तथापि न महालक्ष्म्याः षोडशार्णं प्रकाशयेत् ॥ ९

सप्तकोटिमहामन्त्रैर्या सिद्धिः पृथगीरिता ।
स्मरणात्षोडशार्णस्य तत्सर्वं जायते सकृत् ॥ १०

वर्षैः कोटिशतैर्वापि षोडशार्णस्य वैभवम् ।
वक्तुं तात न शक्नोमि सर्वमन्त्रविशारद ॥ ११

ऋषिश्छन्दस्तथा सर्वं पूर्वमुक्तं प्रजापते ।
तत्सर्वं षोडशार्णस्य योज्यं मन्त्रविशारदैः ॥ १२

पुनरन्यं प्रवक्ष्यामि सावधानोऽवधारय ।
वियत्तुरीयश्च विलोमतोऽनल-
प्रदीपितो वामविलोचनान्वितः ।
स चन्द्रखण्डः कथितो रमा-मनु-
र्मनोरथावाप्तिमहासुरद्रुमः ॥ १३

एकाक्षरस्य मन्त्रस्य भृगुर्वै ऋषिरीरितः ।
[1]न चेद्गायत्रमाख्यातं छन्दः श्रीर्देवता स्मृता ॥ १४

वान्तं बीजं कृशानुः स्यात् शक्तिरीं कीलकं स्मृतम् ।
न्यासः पूर्वोक्त एव स्यात् ध्यानं [2]वाक्यवधारय ॥ १५

---

1. विद्याम् 1. निचृत् 2. वदेऽवधारय

भूयाद् [3]भूयाद् द्विपद्माभयवरदकरा तप्तकार्तस्वराभा
भक्तानामिष्टसिद्धिप्रदकरधृतमाणिक्यपात्रा महाश्रीः ।
रत्नौघाबद्धमौलिर्विमलतरदुकूलार्तवालेपनाढ्या,
पद्माक्षी पद्मनाभोरसि कृतवसतिः पद्मगा श्रीः श्रियै नः ॥ १६

पुनरन्यं महामन्त्रं सर्वसौभाग्यदायकम् ।
सर्वैश्वर्यकरं सद्यःसर्वसिद्धिप्रदायकम् ॥ १७

सौभाग्यमन्त्रं वक्ष्यामि श्रृणु लोकेषु विश्रुतम् । १८
[4]वेदादिभूत भुवनेश्वरि मारवीप्सा
लक्ष्मी महार्णपदपूर्वकमेहियुग्मम् ।
गीर्वापरार्ण भगवच्च पदं च मेति
स्वाहान्तको मनुरयं सकलार्थदाता ॥ १८अ

चतुर्विंशत्यक्षरस्य देवेशो ऋषिरीरितः ।
छन्दो गायत्रमेवस्याद्देवता श्रीसमन्विता[5] ॥ १९

बीजं पूर्वोक्तमेव स्यान्महालक्ष्म्याः सुशोभनम् ॥ २०

घनकृष्णवत्सरार्ति शान्तिबिन्दुभिः
कथितःश्रियः प्रकृतिवाचकोऽक्षरः ।
दुरितापहार्थे[1] सुखधर्ममोक्षदो
भवतामशेषजनरञ्जनक्षमः ॥ २१

3. भूयो 4. भूति–मारबीज सर्वापरार्ण भगवत्सुपदं च मेऽपि–खलु देहिपूर्वः ।
5. समीरिता 1. दुरितापहारकः

तव वाचकं द्रपरमादिकाक्षरं

कथितःश्रियो मदनवाचको मनुः ।

दुरितापहारनिपुणोऽस्तु कीलकम्

भजतामशेषफलदः सुरद्रुमः ॥ २२

पूर्वोक्तन्यासजालानि तत्तत्स्थानेषु विन्यसेत् । २३

हस्तोद्यद्वसुपात्रपङ्कजयुगाभीतिस्फुरन्नूपुर-

ग्रैवेयाङ्कितहारकङ्कणलसन्मौलिज्वलत्कुण्डला ।

विष्णुस्था परिचारिकापरिवृता शुक्लाङ्गरागांशुका

नित्यं दिव्यवसुप्रदा भवभयप्रध्वंसिनी स्यादिति ॥ २४

श्रीषोडशार्णमन्त्रस्य तुल्यमेतन्महामते ।

अप्रकाश्यमिदं ब्रह्मन् सर्वेषां न(:)प्रकाशयेत् ॥ २५

श्री षोडशार्णश्रीमन्त्रक्रमं वच्मि श्रृणुष्व तत् ।

गोप्याद्गोप्यतरं मन्त्रं सर्वैश्वर्यैककारणम् ॥ २६

+
श्रीशक्तिमायास्मरयोनिशक्ति-

स्तारं च बीजद्वयखण्ड मध्यम् ।

शक्त्यादिबीजानि विलोमितानि,

तार्तीयमध्यप्रथमक्रमोऽयम् ॥ २७

इति श्रीमहालक्ष्मीकल्पे नारायणब्रह्मोमामहेश्वर-

संवादे प्रत्यक्षसिद्धिप्रदे महालक्ष्मी -

रत्न (कल्प) कोशाख्ये

षष्ठोऽध्यायः ॥

---

+. अत्र श्री बीजमायेत्येव साधु । अन्यथा शक्तिरूपिणी माया इत्यर्थः कल्पनीयो भवेत् । तारं च बीजद्वय खण्ड मध्यम् - तारं च ओं । बीजयोः ह्रीं श्रीं इति बीजयोः द्वयं खण्डाः वाग्भवकामराजशक्तिखण्डाः च मध्ये यन्त्रेति ।

## ॥ सप्तमोऽध्यायः ॥

पूजाक्रमं प्रवक्ष्यामि महालक्ष्म्याः सुशोभनम् । १

इन्दुवह्निशरकोणवस्वरं
षोडशारदलनागदलाख्यम् ।
वेदसङ्ख्यदलवेदसुरेखा-
विश्वरूपमखिलार्थदचक्रम् ॥ २

महाचक्रमिदं श्रेष्ठं सर्वचक्रोत्तमोत्तमम् ।
श्रीचक्रमिति, विख्यातं सर्वसौभाग्यकारकम् ॥ ३

त्रिकोणकोणनागीशिवब्रह्मचक्रविराजितम्(?) ।
पार्वतीशिवचक्रेण भूवराहेण गर्भितम् ॥ ४

पञ्चकोणेषु वै तात पञ्चचक्रेण गर्भितम् ।
बिन्दुत्रिकोणवस्वादिश्रीचक्रेण विराजितम् ॥ ५

बिन्दुत्रिकोणषट्कोण वसुकोणवसोर्दलैः ।
भूपुरद्वन्द्वचक्रेण सिद्धलक्ष्म्याश्च संयुतम् ॥ ६

बिन्दुत्रिकोणपञ्चारवस्वरं षोडशं दलम् ।
ततो नागदलं वेददलं रेखाचतुष्टयम् ॥ ७

मातङ्गीचक्रमेतेन संयुतं सुविराजितम् ।
प्राचीरेखा लिखेत्पञ्च तिर्यक् पञ्चलिखेत्तथा ॥ ८

कोष्ठषोडशयन्त्रेण भुवनेश्याश्चसंयुतम् ।
वाराह्याश्चक्रराजेन सहस्रदलशोभिना ॥ ९

संयुतं पञ्चचक्रैश्च पञ्चश्रीचक्रसंज्ञकैः ।
महालक्ष्मीमहाचक्रं पञ्चकोणान्तरालकें ॥ १०

रतिमन्मथचक्रेण चक्रेण वसुधारये?
स्वर्णाकर्षणचक्रेण स्वर्णदाया विराजितम् ॥ ११

महागणेशचक्रेण वसुमत्यादिचक्रकैः ।
पञ्चकोणान्तरे चक्र(?) चक्रराजविराजितम् ॥ १२

वस्वरेषु महालक्ष्म्याः वसुचक्रविराजितम् ।
श्रीवासुदेवचक्रेण तथा सङ्कर्षणस्य च ॥ १३

प्रद्युम्नस्यानिरुद्धस्य चक्रराजैर्विराजितम् ।
ऋद्धेरप्यत्र पूर्णाया सुवृद्धेश्चक्रमुत्तमम् ॥ १४

राजलक्ष्म्या महाचक्रराजितं परमात्परम् ।
वाग्वादिन्या नकुल्याश्च हसन्त्याश्चक्रसंयुतम् ॥ १५

भद्रायाः कान्तिविद्यायाः क्षोभिण्याश्चक्रसंयुतम् ।
मदद्रवाया द्राविण्याश्चक्रराजविराजितम् ॥ १६

-----------

अणिमाबालिकादीनां शक्तिचक्रैर्विराजितम् ।
द्वात्रिंशतीनां शक्तीनां चक्रराजविराजितम् ॥ १७

अष्टदिक्पालचक्रैश्च ब्राह्म्यादीनां तथापृकैः ।
वैनतेयसहस्रारहरिसेनादिचक्रकैः ॥ १८

दमकादिचतुर्थैश्च चक्रराजैश्च मण्डितम् ।
सर्वचक्रमयाकारं चक्रं श्रीचक्रमीरितम् ॥ १९

चक्रराजशतैश्चक्रैः षड्डूर्ध्वैश्च सुगर्भितम् ।
महाचक्रमिदं श्रेष्ठ श्रीचक्रमिति विश्रुतम् ॥ २०

यथा श्रीः सर्वदेवानां मन्त्राणां षोडशाक्षरी ।
श्रेष्ठं तथा महाचक्रं महालक्ष्म्याः सुशोभनम् ॥ २१

चक्रस्य ज्ञानमात्रेण धर्मकामार्थमोक्षदम् ।
विधायेत्थं महाचक्रं पश्चात्पूजां समाचरेत् ॥ २२

इति श्रीमहालक्ष्मीकल्पे नारायणब्रह्मोमामहेश्वर-
संवादे प्रत्यक्षसिद्धिप्रदे महालक्ष्मी -
रत्न (कल्प) कोशाख्ये
सप्तमोऽध्यायः ॥

## ॥ अष्टमोऽध्यायः ॥

ब्रह्मोवाच -

पूजाक्रमं तथाचारं सन्ध्यावन्दनपूर्वकम् ।
सरहस्यं ममाचक्ष्व मयि यद्यस्ति ते कृपा ॥ १

नारायणः

चतुरानन वक्ष्यामि सन्ध्यावन्दनपूर्वकम् ।
पूजाक्रमं तथाचारं वच्मि ते कृपयाऽनघ ॥ २

ब्राह्मे मुहूर्ते चोत्थाय शिरसि श्रीगुरुं यजेत् ।
सहस्रदलमध्यस्थकर्णिकायां यजेद्गुरुम् ॥ ३

वामाङ्के सुसमासीनचिच्छक्त्याऽऽलिङ्गितं गुरुम् ।
चन्द्रिकाधौतवसनं मणिकुण्डलमण्डितम् ॥ ४

शिष्याणामिष्टसंसिद्ध्यै वराभयकराम्बुजम् ।
करुणापरिपूर्णान्तः करणं चिन्त्य सद्गुरुम् ॥ ५

पञ्चोपचारैर्मनसाऽभ्यर्चयेद्गुरुमन्त्रतः ।
वाग्भवं भुवनेशीं च कमलाममुकेति च ॥ ६

आनन्दनाथ सौसंविदम्बाश्रीपादुकां ततः ।
पूजयामीति मन्त्रेण पूजयेत्पुरुषोत्तमम् ॥ ७

शिरसि श्रीगुरुं पूज्य नीत्वा चिति लयं ततः ।
पञ्चाङ्गैश्च नमस्कुर्याद्गुरुणाऽध्युषितां दिशम् ॥ ८

आधारशक्तिकमलासनाय नम आसनम् ।
आत्मानमासने स्थाप्य वालया शोधयेत्ततः ॥ ९

इडापिङ्गलनाडीभ्यां पूरकं कुम्भकं क्रमात् ।
प्राणायामत्रयं कुर्यात् रेचकामोदकक्रमात् ॥ १०

मूलाधारेऽनाहते च त्रिकूटे भावयेत्सुधीः ।
वह्निसूर्येन्दुबिम्बेषु दशद्वादशषोडश ॥ ११

कलाः संभावयेद् वह्निसूर्यसोमे[1] अनुक्रमात् ।
वह्नौ वागीश्वरीं विद्याच्छक्तिं सूर्यस्य मण्डले ॥ १२

सोमस्य मण्डले लक्ष्मीं भावयेत्परमामृते ।
चन्द्रविद्रुमहेमाभा विद्यापाशसुपद्मकाः ॥ १३

सुधापूरेण संभाव्य तत्तत्खण्डेन मन्त्रवित् ।
गरुडस्कन्धसंरूढविष्णुवक्षःस्थले श्रियम् ॥ १४

परामृतेन संभाव्य हृदब्जे ब्रह्मरूपिणीम् ।
मन्त्रराजं षोडशार्णं यथाशक्ति जपेद्वशी ॥ १५

बहिर्निगत्य पश्चात्तु मलमूत्रादिशोधनम् ।
अपामार्गखादिराद्यैर्दन्तधावनमाचरेत् ॥ १६

मुखप्रक्षालनं कुर्यात्कलावारं महामते ।
प्राणायामत्रयं कुर्यात्कुम्भकक्रमतोऽनघ ॥ १७

---

1. सोमेष्वनु क्रमात्

न्यासं चरेत्ततः पश्चात् पूर्वोक्ताङ्गकराङ्गकम् ।
स्नात्वा मृदं समादाय वाग्भवेन निनीय च ॥ १८

सन्निधौ कामराजेन निधाय कमलोद्भव ।
वाग्भवेन च संप्रोक्ष्य कामराजेन वीक्ष्य च ॥ १९

[1]तार्तीयनेत्रणादीनामपसारणमाचरेत् ।
तेनैव रक्षणं कुर्यात्तूष्णीं स्नानं समाचरेत् ॥ २०

तीरमासाद्य चाचम्य न्यासमङ्गं पुनश्चरेत् ।
मृदं त्रिधा नमोऽन्तेन वाग्भवेन वितत्य च ॥ २१

सुतीर्थफलदे देवि पुण्यस्वर्गफलाह्वसि ।
एह्येहि मम सान्निध्यं स्नानार्थं वै नमोऽस्तुते ॥ २२

तीर्थरूपां महालक्ष्मीं नमस्कुर्याद्विशेषवित् ।
मूलेन मृत्तिकां सप्तवारं संमन्त्र्य मन्त्रवित् ॥ २३

आद्येन सर्वाविघ्नानां नाशनार्थं विलेपयेत् ।
प्रक्षाल्य च ततः पश्चात् पुनराचम्य तत्ववित् ॥ २४

द्वितीयं च द्वितीयेन दिक्षु किञ्चिद्विनिक्षिपेत् ।
मूलेन तीर्थे तच्छेषं निक्षिपेन्मन्त्रवित्तमः ॥ २५

वामहस्ते च तार्तीयं मृद्भागं स्थाप्य मन्त्रवित् ।
पिधाय तं दक्षिणेन त्रिधा संमन्त्रयेन्मृदम् ॥ २६

---

1. तार्तीयेन तृणादीनामप____ ।

निजाङ्गमङ्गमन्त्रेण लिंपेद्देवीमनुस्मरन् ।
सर्वाङ्गोद्धूलनं तेन चरेल्लक्ष्मीमनुं स्मरन् ॥ २७

स्नात्वाऽऽचम्य कराङ्गं च न्यासं कृत्वोदके सुधीः ।
अङ्कुशाकारया सूर्यमोङ्कारेण विलोकयेत् ॥ २८

सूर्यमण्डलमध्यस्थलक्ष्मीश्रीपादपङ्कजात् ।
निःसरदमृतापूर्णं तीर्थं संभाव्य मन्त्रवित् ॥ २९

त्रिखण्डमुद्रयाऽऽवाह्य तृतीयेनैव मन्त्रवित् ।
बीजगर्भं त्रिकोणं तु बहिर्वरुणमण्डलम् ॥ ३०

कोणे शक्तित्रयं विद्याद्वारुणे सर्वदेवताः ।
तन्मध्येऽहं स्थितोऽस्मीति भाव्य [1]मज्जं पुनःपुनः ॥ ३१

पृथिवीं वरुणं चाग्निं वायुमाकाशमेव च ।
पञ्च वर्णैस्तु भूतानामाधारद्वादशान्तकम् ॥ ३२

दीपवज्ज्वलितान्भाव्य चात्मानं हतकल्मषम् ।
अग्निमध्येन्दुबिम्बं च स्मृत्वा पूर्ववदादरात् ॥ ३३

धेनुं योनिं [2]प्रदर्श्याथ वाग्भवेनाभिमन्त्र्य च ।
महालक्ष्मीं स्मरन्स्नात्वा सप्तवारं जपेन्मनुम् ॥ ३४

शङ्खाख्यमुद्रया देहमभिषिञ्चेत्स्वकं सुधीः ।
एकविंशतिवाराणि मूलं संजप्य मन्त्रवित् ॥ ३५

---

१. मज्जन् २. प्रदर्श्याथ

तार्क्ष्यविष्णुमहालक्ष्मीपादेष्वेवं तु मज्जयेत् ।
उत्तीर्य विमलं वस्त्रं परिधाय विधानवित् ॥ ३६

तत्त्वत्रयेण चाचम्य मूलमन्त्रेण मन्त्रितम् ।
ऊर्ध्वपुण्ड्रं ततो धृत्वा सन्ध्यावन्दनमाचरेत् ॥ ३७

स्नानं कर्तुमशक्तश्चेन्मन्त्रस्नानं समाचरेत् ।
कराङ्गन्यासजालानि पूर्ववत्पूर्वमाचरेत् ॥ ३८

तारं वाग्भवमुच्चार्य आत्मतत्वाय नामतः ।
नमः पदेन सद्वारि प्रथमं प्रपिवेद्बुधः ॥ ३९

प्रणवं कामराजं च विद्यातत्वाय नामतः ।
नमः पदेन यत्तोयं पुनश्चैवं पिवेत्परम् ॥ ४०

ओङ्कारं सौभगं चैव शिवतत्वाय नामतः ।
नमसा तु पिबेत्तोयं देशिकोत्तमदर्शितम् ॥ ४१

प्रणवं च श्रियं सर्वतत्वाय नम इत्यपि ।
चतुष्टयेन तत्वानामाचमेन्मन्त्रवित्तमः ॥ ४२

हस्तेन जलमादाय दक्षिणेन महामते ।
जलं मूलेन संमन्त्र्य सप्तधा साधकोत्तमः ॥ ४३

मूर्ध्नि संप्रोक्ष्य ब्रह्माद्भिः स्नातोऽहमिति भावयन् ।
एवं विशुद्धदेहस्तु सन्ध्यावन्दनमाचरेत् ॥ ४४

शक्त्या गुरून्नमस्कृत्य सन्ध्यासङ्कल्पपूर्वकम् ।
अङ्गन्यासकरन्यासौ कृत्वा चास्त्रावकुण्ठनम् ॥ ४५

जलं दक्षिणहस्तेन वाग्भवेन समुद्धरेत् ।
पिधाय वामहस्तेन भूतार्णैर्मूलविद्यया ॥ ४६

सप्तधाऽऽमन्त्र्य वामेन जलं दक्षिणहस्ततः ।
नववारं क्रमेणैव प्रोक्षयेन्मूलविद्यया ॥ ४७

इडया पापजालानि कृष्य शिष्टे जले क्षिपेत् ।
वामभागे सौरिति च क्षिपेन्नाराचमुद्रया ॥ ४८

सन्ताड्य हस्तौ प्रक्षाल्य ह्सौरिति महामते ।
प्रणवं प्रथमं प्रोक्तं प्रथमं तत्परं भवेत् ॥ ४९

आत्मतत्वं शोधयामि सर्वं पूर्वोक्तमार्गतः ।
चतुर्थाऽऽपीय सलिलं यथावन्मार्जयेद्बुधः ॥ ५०

जलं दक्षिणहस्तेन पूर्ववन्मन्त्र्य मन्त्रवित् ।
पूर्ववत्प्रोक्षयेद्देहे भूमौ मूर्धादिमार्गतः ॥ ५१

त्रिकोणा(न्त)स्थां विद्यां द्विनयनसमुद्भासिवदनां
तमोहन्त्रीं हस्तैर्जलजयुगपुस्ताक्षवलयान् ।
दधानामत्यच्छद्युतिनिचयभूषाविलसितां
हरेर्वक्षोरूढां मनसि कलयामि श्रियमहम् ॥ ५२

एवं ध्यात्वा महालक्ष्मीं बालाकारां प्रजापते ।
ऐंकारं श्रीमहालक्ष्मीवागीशीपादुकां यजेत् ॥ ५३

सूर्यस्य मण्डले चेत्थं महालक्ष्मीं प्रपूजयेत् ।
महादेव्यै तु संप्रोक्त्वा विद्महेति पदं ततः ॥ ५४

महालक्ष्मीं च संप्रोक्ते धीमहीति पदं वदेत् ।
तन्नः श्रीर्मे पदं चोक्त्वा प्रकारं चोदयादिति ॥ ५५

श्रियो गायत्रिरुद्दिष्टा गोप्याद्गोप्यतरा मता ।
वागीश्वर्यै तु संप्रोक्ता प्रातः काले प्रजापते ॥ ५६

महाशक्त्यैच संप्रोक्ता मध्याह्ने सर्वसिद्धिदा ।
विष्णुपत्नी च संप्रोक्ता सायङ्काले महामते ॥ ५७

सर्वदा तु वदेल्लक्ष्म्या महालक्ष्मी च मध्यमाम् ।
तारमैङ्कारसंयुक्तं गायत्रीं वाक्स्वरूपिणीम् ॥ ५८

उच्चार्यार्घ्यं त्रिधा क्षिप्य यथाशक्ति जपेन्मनुम् ।
माध्याह्निकमुपासीत कामराजेन मन्त्रयेत् ॥ ५९

बन्धूकारुणविग्रहां त्रिणयनां वालार्ककल्पांशुकां
भावोदञ्चितयौवनां शशिकलालङ्कारकोटीरकाम् ।
बाहौ भासितपङ्कजद्वयकरां पाशाङ्कुशौ विभ्रतीं
विष्णूरःस्थलसंश्रितामनुदिनं माहेश्वरीमीश्वरीम् । ६०

प्रणवं कामराजं च समुद्धृत्य च मन्त्रवित् ।
शक्तिरूपां च गायत्रीं स्मरन्नर्घ्यं तथा क्षिपेत् ॥ ६१

सायाह्ने सौभगाख्येन जलं संमन्त्र्य मन्त्रवित् ।
प्रोक्षणादि चरेत्तात ध्यानभेदं वदामि ते ॥ ६२

कूलङ्कषं मदनधामपयो दधानां
पद्मे वराभय लसन्मणिपात्रहस्ताम् ।
सत्वाकृतिं द्विनयनाममृतांशुकल्पा-
मम्बां स्मरामि मनसा हरिहृत्सरोजे ॥ ६३

प्रणवं चरमं बीजं महालक्ष्मीति तत्पदम् ।
पादुकां पूजयामीति रवौ संपूजयेत्सुधीः ६४

सायङ्काले महालक्ष्म्यास्त्रिधाचार्घ्यं विनिक्षिपेत् ।
एवं ब्रह्मास्त्रसंज्ञेन कृत्वाऽऽत्मानं प्रदक्षिणम् ॥ ६५

उपसंहारमन्त्रेण उपसंहृत्य चाक्षरम् ।
जले श्रीचक्रमालिख्य धेनुयोनी प्रदर्श्य च ॥ ६६

श्रियं श्रीषोडशार्णेन श्रीपतिं तर्पयेत्तथा ।
पञ्चार्णेन महातार्क्ष्यं तर्पयेन्मन्त्रतत्ववित् ॥ ६७

पञ्चविंशतिवर्णेन वागीशीं च त्वया युताम् ।
हरार्धदेहां वै गौरीं षोडशार्णेन तर्पयेत् ॥ ६८

वाराहार्धतनुं भूमिं षट्पञ्चाशन्मनोस्तथा ।
तर्पयेत्त्रिपुरां पञ्चदशार्णेन प्रजापते ॥ ६९

अष्टाविंशतिवर्णेन सिद्धलक्ष्मीं च तर्पयेत् ।
न्यूनद्वयशतार्णेन महामातङ्गिनीं तथा ॥ ७०

त्र्यक्षतुर्यां महामायां भुवनेशीं च तर्पयेत् ।
शतविंशन्महार्णेन वाराहीं तर्पयेत्कविः ॥ ७१

द्वात्रिंशद्वर्णमन्त्रेण रतिं सन्तर्पयेद्बुधः ।
मदनं त्रिदशार्णेन तर्पयेत्सर्वमोहनम् ॥ ७२

तर्पयेद्वसुधारां च षड्विंशार्णेन मन्त्रवित् ।
चत्वारिंशद्ववरार्णेन तथा शङ्खनिधिं मतम् ॥ ७३

स्वर्णदां द्वादशाक्षर्या तर्पयेन्मन्त्रवित्तमः ।
एकषड्दशवर्णेन स्वर्णाकर्षकरं प्रभुम् ॥ ७४

अष्टाविंशतिवर्णेन गणेशाङ्कनिवासिनीम् ।
महागणपतिं चैव तर्पयेन्मन्त्रवित्तमः ॥ ७५

षड्विंशद्वर्णमन्त्रेण तथा वसुमतीमपि ।
सप्तत्रिंशद्वरार्णेन तर्प्य पद्मनिधिं ततः ॥ ७६

षट्त्रिंशत्या महालक्ष्मीं तर्पयेत्कमलासन ।
तर्पयेद्वासुदेवं च द्वादशार्णेन मन्त्रवित् ॥ ७७

तर्पयेत् द्वादशार्णेन जगद्योनिं सरस्वतीम् ।
तथा सङ्कर्षणं चापि द्वादशार्णेन तर्पयेत् ॥ ७८

रमां सन्तर्पयेदष्टाविंशत्या तु सुबुद्धिमान् ।
चतुर्विंशति वर्णेन प्रद्युम्नं सर्वमोहनम् ॥ ७९

सप्तविंशतिवर्णेन कीर्तिदां वसुदायिनीम् ।
षोडशाक्षरमन्त्रेण तर्पयेदनिरुद्धकम् ॥ ८०

द्वात्रिंशार्णेन वै ऋद्धिमष्टाक्षर्या नरं तथा ।
द्वात्रिंशत्या समृद्धिं च तर्पयेन्मन्त्रवित्तमः ॥ ८१

चतुर्विंशतिवर्णेन राज्यलक्ष्मीं च तर्पयेत् ।
वागीश्वरीं च नकुलीं हसन्तीं भद्रकां तथा ॥ ८२

कान्तिविद्यां च मदनावतीं चैव मदद्रवाम् ।
अणिमाद्यष्टसिद्धीश्च बालिकाद्यष्टकं तथा ॥ ८३

श्रीविद्यां तर्पयेद्देवीं दिक्पालानपि तर्पयेत् ।
ब्राह्म्यादीस्तर्पयेद्देवीर्वैनतेयं सुदर्शनम् ॥ ८४

हरिपञ्चमुखं विष्वक्सेनं दमकमेव च ।
शललं गुगुलुं चैव तर्पयेच्च कुरण्डुलम् ॥ ८५

शाकप — स्तथा देवीः शिवशक्ती च तर्पयेत् ।
नारायण्याद्याः संतर्प्य सर्वमन्त्रफलप्रदाः ॥ ८६

चतुर्मुखादिशक्तीश्च तथा शस्तं च तर्पयेत् ।
महादुर्गां च वटुकं अविघ्नं मन्त्रवित्तमः ॥ ८७

भद्रं सुभद्रं चिच्छक्तिं मायाशक्तिं तथैव च ।
अब्जं शङ्खं तथा गङ्गां यमुनां च जयां तथा ॥ ८८

विजयां कीर्तिदां चैव श्रियं चण्डां प्रचण्डिकाम् ।
गौरीं लक्ष्मीं महाबुद्धिं तत्तन्नाम्ना तु तर्पयेत् ॥ ८९
विभूत्यादीर्नवाप्येवं विमलादीश्च तर्पयेत् ।
इत्येवं कथितं सर्वमतः किं श्रोतुमिच्छसि ॥ ९०

इति श्रीमहालक्ष्मीकल्पे नारायणब्रह्मोमामहेश्वर-
संवादे प्रत्यक्षसिद्धिप्रदे महालक्ष्मी -
रत्न (कल्प) कोशाख्ये

अष्टमोऽध्यायः ॥

## ॥ नवमोऽध्यायः ॥

ब्रह्मा :- (उवाच)

नमस्ते देवदेवेश नमस्ते विश्वभावन ।
अनुष्ठानविधेः पश्चात् किं कर्तव्यं च तद्वद ॥ १

श्रीभगवान् - (उवाच)

श्रृणु वक्ष्यामि भद्रं ते सर्वंव्रत्य महामते ।
सावधानमना भूत्वा सर्वं तदवधारय ॥ २

एवं कृत्वा ततो यागमण्टपं प्रविशेद्बुधः ।
अङ्गन्यासकरन्यासान् कृत्वा मन्त्रविशारदः ॥ ३

पूर्ववन्मण्टपं ध्यायेत्सर्वप्राकारशोभितम् ।
पूर्वद्वारं समासाद्य चैतद्द्वारश्रियं ततः ॥ ४

भद्रं सुभद्रं चिच्छक्तिं मायाशक्तिं समर्चयेत् ।
दक्षिणद्वारमासाद्य द्वारश्रियमथाम्बुजम् ॥ ५

शङ्खं गङ्गां च यमुनां पूजयेन्मनसा सुधीः ।
पश्चिमद्वारदेशे तु श्रियं पूज्य बलं तथा ॥ ६

प्रबलं चण्डिकां चापि पूजयेच्च प्रचण्डिकाम् ।
उत्तरद्वारमासाद्य द्वार तथा च श्रीं तथा जयाम् ॥ ७

विजयां चापि गौरीं च श्रियं चैव समर्चयेत् ।
अपसर्पन्तु ते भूता ये भूता भुवि संस्थिताः ॥ ८

ये भूता विघ्नकर्तास्ते नश्यन्तु शिवाज्ञया ।
ओंह्रोऽस्त्राय फट् प्रोच्य सिद्धार्थाक्षतपुष्पकम् ॥ ९

निक्षिप्य विघ्नानुत्सार्य तथा नाराचमुद्रया ।
वामपादस्य पार्ष्णिघातत्रयेण च भौमिकान् ॥ १०

करतालत्रयेणान्तरिक्षान् विघ्नान्नुदेद्बुधः ।
धर्मं ज्ञानं च वैराग्यमैश्वर्यं चापि पूजयेत् ॥ ११

अधर्मं पूजयेत्तात ह्यज्ञानं च ततः परम् ।
अवैराग्यं ततःपूज्य अनैश्वर्यं ततः परम् ॥ १२

कृत्वा पूर्वं ताडनादि पश्चाद् द्वारार्चनं भवेत् ।
पीनोन्नतकुचां पद्मनतिमुद्राकराम्बुजाम् ॥ १३

आधारशक्तिं पीताभामर्चयेच्च चतुर्भुजाम् ।
इन्द्रनीलमणिश्यामां कूर्मवक्त्रां कपालिनीम् ॥ १४

अभयानतिमुद्राभ्यां लसद्बाहुचतुष्टयाम् ।
कूर्मशक्तिं समभ्यर्च्यानन्तशक्तिं समर्चयेत् ॥ १५

श्वेतां फणिमणिप्रोद्यन्मूर्ध्नीं ध्यात्वा कपालिनीम् ।
अभयानतिमुद्राभ्यां लसद्बाहुचतुष्टयाम् ॥ १६

मण्डूकां च वराहां च सर्वाभरणभूषिताम् ।
वज्रपद्मनमस्कारलसद्बाहुचतुष्टयाम् ॥ १७

धरणीं सर्वभूषाढ्यां नमस्कुर्याद्विचक्षणः ।
विभूतिमुन्नतिं कान्तिं हृष्टिं कीर्तिं समुन्नतिम् ॥ १८

व्युष्टिमुत्कृष्टिमृद्धिं च पङ्कजद्वयधारिणीः ।
चिन्ताऽभयधराःसर्वा नमस्कुर्याद्विशेषवित् ॥ १९

विमलादीरष्टदेवीः सर्वाभरणभूषिताः ।
माणिक्यशङ्खचक्राद्यैर्विराजत्करपल्लवाः ॥ २०

माणिक्याभयपुष्पेषुपुण्ड्रपाणिचतुष्टयम् ।
महाशास्तं नमस्कुर्यान्निग्रहानुग्रहे रतम् ॥ २१

दूर्वादलश्यामलाङ्गीं लोचनत्रयराजिताम् ।
शङ्खचक्रवराभीतिकरां पीनोन्नतस्तनीम् ॥ २२

दुर्गां देवीं नमस्कुर्याद् दुरितोत्सारणे रताम् ।
कालमेघनिभाकारं वृत्तलोचनभूषितम् ॥ २३

खट्वाङ्गमसिपाणिं च शूलं चैव तथा पुनः ।
डमरुं च कपालं च वरदं भुजगं तथा ॥ २४

आपदुद्धारणं देवं नमस्कुर्याच्च मन्त्रवित् ।
चतुर्मुखीं महाशक्तिं चतुराननशक्तिकाम् ॥ २५

चतुरस्रसुगेहां च चतुरस्रसुगात्रिणीम् ।
चतुर्वर्गैकफलदां त्रयीशक्तिमनन्तरम् ॥ २६

त्र्यक्षाश्चैव च त्रिरेखाश्च ज्ञानपुस्तकधारिणीः ।
अक्षसूत्रकरा देवीः शरण्याः शरणं व्रजेत् ॥ २७

नारायणीं केशवीं च माधवीं हरिवल्लभाम् ।
गोविन्दां वैष्णवीं चैव नमस्कुर्यात् त्रिविक्रमाम् ॥ २८

वामनां श्रीधरां देवीं हृषीकेशां शुचिस्मिताम् ।
ईशरञ्जनिकां पद्मोदरां कमललोचनाम् ॥ २९

पद्मद्वयधराः सर्वाः सततं शरणं व्रजेत् ।
शङ्करीं चैव ईशान्यामिन्दुशेखरशक्तिकाम् ॥ ३०

जगत्कुटुम्बिनीं चैव अर्धनारीश्वरीं तथा ।
अघोररूपिणीं शक्तिं हुतवाहा[1] शनिं तथा ॥ ३१

हालाहलधरां शक्तिं भूरिभागां शुचिस्मिताम् ।
इन्दुशेखरिकां देवीं वरदाभयधारिणीः ॥ ३२

पाशाङ्कुशधराः सौम्याः सततं शरणं व्रजेत् ।
पद्मद्वयधरां देवीं माणिक्याभयधारिणीम् ॥ ३३

परां पद्मामहं[2] नित्यं भजेत्सन्ध्यास्वरूपिणीम् ।
चन्द्रधौतसमाकारान्दमकादिमहाबलान् ॥ ३४
वन्दे वारुणमुख्यांस्तान् धनसौभाग्यदायकान् ॥ ३५

परेशीं पद्महस्तां तां वराभयकरोज्ज्वलाम् ।
तप्तकाञ्चनवर्णाभां वन्देऽहं परमेश्वरीम् ॥ ३६

वैनतेयं चतुर्बाहुशङ्खचक्रवराभयम् ।
अष्टनागमहाभूषं वन्देऽहं वरदं प्रभुम् ॥ ३७

शङ्खचक्रसुचापं च परशुं चाभयं तथा ।
शूलं पाशाङ्कुशौ चाग्निं वज्रं खेटं हलं तथा ॥ ३८

1. शक्तिं हुतवहस्तथा 2. पद्मामहं - पद्मालयामिति वा

मुसलं च तथा कुन्तं धारयन्तं सुदर्शनम्[1] ।
सूर्यकोटिप्रतीकाशं प्रपद्येऽहं सुदर्शनम् ॥ ३९

हरिपञ्चमुखं देवं पञ्चमूर्तिसमन्वितम् ।
पूर्वाननं हनूमन्तं नृसिह्मं दक्षिणे तथा ॥ ४०

पश्चिमे वैनतेयाख्यमुत्तरे पोत्रिरूपिणम् ।
हयग्रीवं तथोर्ध्वं च पञ्चवक्त्रसमन्वितम् ॥ ४१

महावृक्षं[2] पर्वतं च द्विभुजं पर्वतोपमम् ।
हनूमन्तमहं वन्दे सर्वाभीष्टप्रदायकम् ॥ ४२

शङ्खचक्रकरं देवं हिरण्यकशिपुं करैः ।
धा(दा)रयन्तं नृसिह्मं वै प्रणतोऽस्मीतिमन्त्रतः ॥ ४३

वराभयकरं देवं शङ्खचक्रधरं परम् ।
वैनतेयं महावाहुं वन्देऽहं नागमर्दनम् ॥ ४४

शङ्खचक्रगदाभीतिधारिणं पोत्रिवक्त्रकम् ।
शरण्यं शरणं श्वेतं प्रपद्येऽहं महामते ॥ ४५

अश्ववक्त्रं हयग्रीवं सर्वविद्यास्वरूपिणम् ।
सर्वविद्याप्रसिद्ध्यर्थं प्रपद्येऽहं महामते ॥ ४६

सेनाधिपं विशालाक्षं शङ्खचक्रवराभयम्
सर्वरक्षां समुद्दिश्य वन्देऽहं भुवनेश्वरम् ॥ ४७

---

1. शोभन दर्शनम् 2 द्विभुजे

पद्मद्वयधरां लक्ष्मीं वन्देऽहं पुरसुन्दरीम् ॥ ४८

मातृर्दूर्वादलश्यामास्तत्तदायुधसंयुताः ।
अष्टकर्मप्रसिद्ध्यर्थं वन्दे सौभाग्यकारिणीः ॥ ४९

पूर्वोक्तलक्षणैर्युक्तां वन्देऽहं पुरवासिनीम् ॥ ५०

पीतवर्णं वज्रहस्तमिन्द्रं सर्वसुराधिपम् ।
"त्रातारमिति"मन्त्रेण नमस्कारं चरेद्बुधः ॥ ५१

तेतोऽधिपं शक्तिहस्तं पिङ्गलं मेषवाहनम् ।
"अग्ने त्वमिति" मन्त्रेण नतिमग्नेश्चरेद्बुधः ॥ ५२

कृष्णवर्णं दण्डहस्तं सर्वप्रेताधिपं यमम् ।
"सुगं न" इतिमन्त्रेण नतिं कुर्याच्च मन्त्रवित् ॥ ५३

नीलकण्ठं खड्गहस्तं सर्वरक्षोऽधिपं नतिम् ।
"असुन्वं ते" ति मन्त्रेण निरृऋतेःकारयेद्बुधः ॥ ५४

श्वेतवर्णं च वरुणं पाशहस्तं जलाधिपम् ।
"अवतेहेति" मन्त्रेण वरुणस्य नतिं चरेत् ॥ ५५

वायुं सुधूम्रवर्णं च ध्वजाङ्कुशधरं सुधीः ।
"आनोनियुद्भि"र्मन्त्रेण वायोः कुर्यान्नतिं ततः ॥ ५६

श्वेतवर्णं गदाहस्तं नक्षत्राधिपतिं प्रभुम् ।
"अयं सोमे"ति मन्त्रेण सोमस्य नतिमाचरेत् ॥ ५७

शुद्धस्फटिकवर्णाभं शूलहस्तं महेश्वरम् ।
"तदी(मी)शानेति"मन्त्रेण नतिमीशस्य कारयेत् ॥ ५८

पराश्रीपरमानन्दां पद्मद्वयधरां पराम् ।
परमानन्दसिद्ध्यर्थं त्वां वन्दे परमेश्वरीम् ॥ ५९

श्रियादीश्च महाभागाः पद्मपात्रवराभयाः ।
सर्वसिद्धिप्रसिद्ध्यर्थं नौमि सर्वेश्वरीः सदा ॥ ६०

पद्मद्वयाभयकरीं वन्देऽहं परमालिनीम् ।
अणिमादीर्बालिकादीश्चिन्ताभयकरोज्ज्वलाः ॥ ६१

अष्टैश्वर्यप्रसिद्ध्यर्थमणिमादीरहं भजे ॥ ६२

अक्षसूत्रं पुस्तकं च वरं चाभयमेव च ।
वागैश्वर्यप्रसिद्ध्यर्थं वागीशीं त्वामहं भजे ॥ ६३

वीणाशुककरां देवीं वरदाभयधारीणीम् ।
सारस्वतप्रसिद्ध्यर्थं नकुलीं त्वामहं भजे ॥ ६४

हसन्ति हसितालापे लक्ष्म्यास्तु परिचारिके ।
मन्त्रविघ्नप्रशान्त्यर्थं वेत्रहस्ते नमोऽस्तु ते ॥ ६५

कृष्णवर्णे महाकृत्ये सर्वकृत्याविनाशिनि ।
शूलपाशधरे देवि त्वां वन्दे मे रिपून् हन ॥ ६६

कान्तिविद्ये महादेवि तप्तचामीकरप्रभे ।
पद्महस्ते नमामि त्वां सर्वकान्ति प्रयच्छ मे ॥ ६७

शुकहस्ते महादेवि नमस्ते मदनावति ।
कुचद्वन्द्वानते शत्रून् क्षोभयाशु ममानघे ॥ ६८

मदद्रवे महाभागे त्वां वन्दे वरदां सदा ।
शत्रूणां मम सर्वेषां मदं द्रावय द्रावय ॥ ६९

स्वर्णाब्जहस्तां विश्वेशीं द्राविणीं त्वामहं भजे ।
पाषाणसदृशं शत्रोर्हृदयं द्रावयस्व मे ॥ ७०
पराम्बां पद्मपत्राक्षीं पद्मनाभप्रियां रमाम् ।
त्वां पद्महस्तां वन्देऽहं शङ्खचक्रादिधारिणीम् ॥ ७१

श्वेतवर्णां जगद्योनिं पुस्तकाभयधारिणीम् ।
सङ्कर्षणं च पीताभं शङ्खचक्रधरं भजे ॥ ७२

हेमाभां मोहिनीं देवीमुत्पलद्वयधारिणीम् ।
पुण्ड्रेक्षुचापं प्रद्युम्नं तमालाभं सदा भजे ॥ ७३

स्वर्णपात्रधरां कीर्तिं तप्तजाम्बूनदप्रभाम् । ७४

तप्तकाञ्चनवर्णाभे ऋद्धे ऋद्धिकरे शुभे ।
अक्षय्यपात्रहस्ते त्वां नौमि ऋद्धिं ददस्व मे ॥ ७५

क्षीरान्नपात्रहस्तां त्वां दर्वीं माणिक्यराजिताम् ।
वन्देऽहमन्नदां देवीमिष्टमन्नं ददस्व मे ॥ ७६

समृद्धे त्वामहं नित्यं भजे सर्वसमृद्धिदाम् ।
संफुल्लपद्महस्तेन समृद्धिं देहि ते नमः ॥ ७७

पद्मं सुरद्रुमलतां मुकुरं विपञ्चीं
पुष्पेषुमिक्षुधनुरानतशालिकाग्रम् ।
गन्धस्रजं वरदचिह्नमभीतिमुद्रां
वन्दे करेण दधतीमिह राज्यलक्ष्मीम् ॥ ७८

महापरां महादेवीं पङ्कजद्वयधारिणीम् ।
वन्देऽहं परमानन्दं मे देहि हरिवल्लभे ॥ ७९

हेमवर्णां रतिं देवीमुत्पलद्वयधारिणीम् ।
पुण्ड्रेक्षुचापपुष्पेषुं वन्देऽहं मदनं प्रभुम् ॥ ८०

वराभयकरां पद्ममणिपात्रविराजिताम् ।
वसुधारामहं वन्दे तथा शङ्खनिधिं प्रभुम् ॥ ८१

हेमकुम्भधरां स्वर्णदात्रीं पद्मां वराभये ।
सुधाघटेन संयुक्तं स्वर्णाकर्षकरं भजे ॥ ८२

गणेशाङ्कस्थितां पद्मां पद्महस्तां शुचिस्मिताम् ।
बीजपूरगदामिक्षुचापं शूलं च चक्रकम् ॥ ८३

पद्मं पाशोत्पले व्रीहिविषाणौ दधतं करैः ।
महागणेशं वन्देऽहं सर्वसम्पत्प्रदायकम् ॥ ८४

वराभयामृतघटचिन्तामणिकराम्बुजाम् ।
तथा वसुमतीं पद्मनिधिं वन्दे विभूतये ॥ ८५

महापरेशीं पद्माक्षीं पङ्कजद्वयधारिणीम् ।
पद्मनाभप्रियां देवीं वन्देऽहं भुवनेश्वरीम् ॥ ८६

पुण्ड्रेक्षुचापपुष्पेषुपाशाङ्कुशकराम्बुजाम् ।
रक्तवर्णामहं वन्दे महात्रिपुरसुन्दरीम् ॥ ८७

हेमकुम्भाभयधरां पङ्कजद्वयधारिणीम् ।
सिद्धलक्ष्मीमहं नित्यं वन्दे त्वां परमेश्वरीम् ॥ ८८

शुकवीणाधरां देवीमिन्द्रनीलमणिप्रभाम् ।
जगन्मोहनरूपां त्वां वन्दे मातङ्गकन्यकाम् ॥ ८९

पाशाङ्कुशधरां देवीं वरदाभयधारिणीम् ।
भुवनेशीमहं वन्दे कोटिकर्मफलप्रदाम् ॥ ९०

चक्रं शङ्खं च मुसलमभयं दक्षिणैः करैः ।
खड्गं खेटं हलं चैव वरं वामैश्च बिभ्रतीम् ॥ ९१

वार्तालीं वरदां वन्दे सर्वशत्रुविनाशिनीम् ।
पद्मद्वयधरां लक्ष्मीं महापरमसुन्दरीम् ॥ ९२

सर्वैश्वर्यप्रदां नित्यं नौमि त्वां वरदा भव ।
तप्तकाञ्चनसङ्काशं वीणां सितशुकं वरं ॥ ९३

अक्षसूत्रं वामभागे पुस्तकं च कमण्डुलुम् ।
ज्ञानमुद्रामभीतिं च वहन्तं दक्षिणैर्भुजैः ॥ ९४

वागीश्वर्यर्धशरीरं त्वां वन्देऽहं चतुराननम् ।
पाशाङ्कुशौ वरं हेमघटमेणं महानलम् ॥ ९५

अभयामृतकुम्भौ च दधतं शङ्करप्रभुम् ।
अर्धनारीश्वरं देवमहं वन्दे परात्परम् ॥ ९६

शुकव्रीहिहेमघटं चैव शङ्खं रथाङ्गकम् ।
गदाभीती च दधतं भूवराहं समाश्रये ॥ ९७

सर्वज्ञाद्याश्च षड्देवीः नानाभरणभूषिताः ।
पद्मद्वयधराः सर्वाः वरदाभयधारिणीः ॥ ९८

सर्वज्ञत्वादिसिद्ध्यर्थं वन्देऽभीष्टप्रदायकाः ।
महापरमलक्ष्मीं त्वां पङ्कजद्वयधारिणीम् ॥ ९९

वन्दे पद्मपलाशाक्षीं श्रीतत्वात्मि(म)करूपिणीम् ।
शङ्खचक्रवराभीतिहेमामृतघटोज्ज्वलम् ॥ १००

भगवत्पादविन्यस्तबाहुद्वयमरिन्दमम् ।
महातार्क्ष्यमहं वन्दे सर्वच्छन्दोमयं प्रभुम् ॥ १०१

कालाम्बुदश्यामलाङ्गं शङ्खचक्रवराभयम् ।
कमलासन मां ध्यात्वा नमस्कुर्याद्विचक्षणः ॥ १०२

नमस्ते सर्वदेवेश नमः सन्ध्यास्वरूपिणे ।
नमस्ते श्रीनिवासाय तार्क्ष्यरूपाय ते नमः ॥ १०३

चैतन्यरूपिणीं देवीं लसद्बाहुचतुष्टयाम् ।
सत्वाकृतिं महालक्ष्मीं पङ्कजद्वयधारिणीम् ॥ १०४

वरमाणिक्यपात्रेण लसद्वरकराम्बुजाम् ।
एवं ध्यात्वा नमस्कुर्यात्परब्रह्मस्वरूपिणीम् ॥ १०५

गरुडस्कन्धसंरूढविष्णुवक्षस्थलालये ।
सन्ध्यारूपे नमस्तेऽस्तु चित्स्वरूपिणि ते नमः ॥ १०६

महापरश्रीश्रीविद्यां चन्द्रकान्तिसमप्रभाम् ।
सप्तकोटिमहामन्त्रमन्त्रराजस्वरूपिणीम् ॥ १०७

सर्वदेवीश्वरीं सर्वयन्त्रतन्त्रफलप्रदाम् ।
नमस्कुर्याद्विशेषज्ञस्तत्तन्मन्त्रेण मन्त्रवित् ॥ १०८

कृत्वा वन्दनमेवं वै पश्चाच्छुद्धिं समाचरेत् ।
सन्ध्यावन्दनमेवं वै सम्यगुक्तं मयाऽनघ ॥ १०९

एतद्गुह्यतमं तात सर्वेषां न प्रकाशयेत् ।
एवं संक्षेपतः प्रोक्तमतः किं श्रोतुमिच्छसि ॥ ११०

इति श्रीमहालक्ष्मीकल्पे नारायणब्रह्मोमामहेश्वर-
संवादे प्रत्यक्षसिद्धिप्रदे महालक्ष्मी -
रत्न (कल्प) कोशाख्ये
नवमोऽध्यायः ॥

## ॥ दशमोऽध्यायः ॥

ब्रह्मोवाच -

महाविष्णो महादेव देवदेव सुरार्चित ।
भूतशुध्यादिकं सर्वं यथावद् वक्तुमर्हसि ॥ १

श्रीभगवानुवाच -

भद्रं ते श्रृणु वक्ष्यामि भूतशुध्यादिकं क्रमात् ।
सरहस्यं तव प्रीत्या सत्यं सत्यं महामते ॥ २

स्वासनं कल्पयेदादौ निजं गुरुमनुस्मरन् ।
पृथ्वि त्वया धृता लोका देवि त्वं विष्णुना धृता ॥ ३

त्वं च धारय मां देवि पवित्रं कुरु चासनम् ।
"स्योनापृथिवीति" मन्त्रेण स्वासनं कल्पयेद्बुधः ॥ ४

उपविश्यासने धीमान् नतिं कुर्यात् त्रिखण्डया ।
परम्परागुरूणां वै कुर्यान्मन्त्रेण मन्त्रवित् ॥ ५

दीपनाथार्चनं कुर्याद् अष्टकोष्ठे च यन्त्रके ।
दिक्षु स्वरद्वन्द्वयुगमष्टवर्गं क्रमाल्लिखेत् ॥ ६

यन्नामाद्यक्षरं यत्र निपतेत् तत्सबिन्दुकम् ।
तदक्षरं समुद्धृत्य तन्मन्त्रेण यजेद्बधुः ॥ ७

अमुकं वर्णनामैश्वराय द्वादश उच्चरेत् ।

शक्तिवर्णं समुद्धृत्य संहिताय ततः परम् ॥ ८

एतदास्याधिपतये (य) अस्मिन् क्षेत्रेऽप्यिमामिति ।
पूजां गृह्ण द्वयं पश्चान्मम सर्वपदं वदेत् ॥ ९

कर्माणि साधयद्वन्द्वं क्षोभयेति द्वयं वदेत् ।
प्रसादं च कुरुद्वन्द्वं स्वाहान्तन्मन्त्रमुच्यते ॥ १०

दीपनाथमनेनैवमर्चयेन्मंत्रवित्तमः ।
भूतशुद्धिं समुद्दिश्य प्राणायामं त्रिधा चरेत् ॥ ११

जीवं परमात्मना "हंस" इति मन्त्रेण योजयेत् ।
पिङ्गलाख्याध्वना वायुं परिपूज्य विचक्षण ॥ १२

इडया वायुमाकृष्य कुम्भवत्क्रममाचरेत् ।
षड्बिन्दुलाञ्छितं नाभौ नीलवर्णं षडश्रकम् ॥ १३

चलस्वभावं स्पर्शाख्यगुणं वायोश्च मण्डलम् ।
विचिन्त्य पापपुरुषं तत्र ओं यमिति स्मरन् ॥ १४

दशसङ्ख्या जपित्वैतत्पापदेहं समुद्धरेत् ।
शोषयामि नमश्चोक्त्वा शोषयेदनिलेन तम् ॥ १५

विरेचयेच्च तेनैव वायुं सम्यग्विचक्षणः ।
इडया वायुमाकृष्य कुम्भयित्वा पुनः पुनः ॥ १६

त्रिकोणं हृदये रक्तमुष्णं स्वस्तिकलाञ्छितम् ।
ध्यात्वाग्नेर्मण्डलं शुष्कं भावयेत्पापरूपिणम् ॥ १७

रेफं द्वादशवारं तं मनसाऽऽवर्त्य मन्त्रवित् ।
शुष्कदेहं दहामीति नमो दग्धं विचिन्तयेत् ॥ १८

रेचयेद्वायुमिडया पुनस्तेन प्रपूरयेत् ।
पूर्ववत्कुम्भकं कृत्वा वृत्तं धवलवर्णकम् ॥ १९

द्रवस्वभावं वरुणदेवताकेन्दुमण्डलम् ।
सहस्रकमलं मूर्ध्नि रसवच्चिन्तयेद्बुधः ॥ २०

वमित्यमृतबीजेन मनसाऽऽवर्त्य षोडश ।
परामृतमहावृष्ट्या प्लावयेत् सर्वभस्म तत् ॥ २१

दग्धं पिङ्गलया कज्जलाकारं विगलय्य च ।
सुधाधाराप्लावनेन देहं संप्लावितं स्मरेत् ॥ २२

पीतवर्णं चतुष्कोणं कठिनं वज्रलाञ्छितम् ।
मूलाधारे भावयित्वा भूबीजं समनुस्मरन् ॥ २३

शरीरं द्रढयामीति नमः प्रणवमेव च ।
स्वाहा लकारमुच्चार्य धरण्यै नम इत्यपि ॥ २४

ओं स्वाहेति च मन्त्रेण चतुर्विंशतिवारकम् ।
अङ्गुष्ठमस्तकान्तं च शरीरं चिन्तयेद् दृढम् ॥ २५

वधूक ? लाञ्छितं व्योममण्डलं स्फटिकप्रभम् ।
आकाशबीजमुच्चार्य तारमाकाशमेव च ॥ २६

आकाशाय नमः प्रोक्त्वा ? 'ओं हां' इति च मन्त्रतः ।
द्वात्रिंशद्वारमुच्चार्य तस्मादुध्य ? तेन ततःपरम् । २७

देहमङ्गुष्ठमूर्धान्तं भावयेत् सकलं सुधीः ।
एवं भूतं विशुध्याशु ततः प्राणान् प्रतिष्ठयेत् ॥ २८

अथवेत्थं तु वा कुर्याद्भूतशुद्धिं विचक्षणः ।
प्राणायामं त्रिधा कृत्वा ध्यायेत्तत्पापरूपिणम् ॥ २९

ब्रह्महत्याशिरस्कं च स्वर्णस्तेयभुजद्वयम् ।
सुरापानहृदा युक्तं गुरुतल्पकटीयुतम् ॥ ३०

तत्संयोगपदद्वन्द्वमङ्गप्रत्यङ्गपातकम् ।
उपपातकरोमाणं रक्तश्मश्रुविलोचनम् ॥ ३१

खड्गचर्मधरं पापं नाभेरुपरि निक्षिपेत् ।
ध्यायेद्दक्षिणकुक्षिस्थं वध्यं नाराचमुद्रया ॥ ३२

वायुबीजस्य वै तात किष्किन्ध ऋषिरुच्यते ।
छन्दो जगतिराख्यातं महावायुश्च देवता ॥ ३३

धूम्रवर्णस्ततः शोषणार्थे योगः प्रजापते ।
"आवात वाहि" मन्त्रेण वायुबीजेन मन्त्रवित् ॥ ३४

शरीरं शोषयेद्विद्वान् वायुबीजमनुस्मरन् ।
काश्यपश्चाग्निबीजस्य ऋषिः प्रोक्तो महामते ॥ ३५

छन्दस्त्रिष्टुप् तथा देवो ह्यग्निः पिङ्गलवर्णकः ।
योगश्च दाहनार्थे तु रेफेण सह संवदेत् ॥ ३६

"अग्ने रक्षे तु" मन्त्रेण जपेत् षोडशवारतः ।
वकारं षोडशं जप्त्वा अमृतेन शरीरकम् ॥ ३७

प्लावयामीति मन्त्रेण प्लावयेत्कमलासन ।
लकारस्य ऋषिर्ब्रह्मन् अन्तर्यामी स उच्यते ॥ ३८

सुतलं छन्दः कूर्मो वै देवता परिकीर्तिता ।
नियोगश्चैव सृष्ट्यर्थे "भूमिर्भूम्नेति" मन्त्रतः ॥ ३९

"अन्नाद्यायादये"त्यन्तं ज़प्त्वा लं षोडशं तथा ।
शरीरं श्यामवर्णेन करोमि पिण्डमित्यतः ॥ ४०

ह्रींकारस्य ऋषिर्ब्रह्मन् गौतमो मुनिरीरितः ।
छन्दस्तु जगती प्रोक्ता परहंसश्च देवता ॥ ४१

अवयवानां सृष्ट्यर्थे नियोगः कमलासन ।
"हंसःशुचिषन्"मन्त्रेण "बृहदि"त्यन्तमुच्चरेत् ॥ ४२

ह्रींकारं षोडशं प्रोक्त्वा शरीरावयवं वदेत् ।
करोमीति च मन्त्रेण आत्मनो काश इत्यतः ? ॥ ४३

सञ्जातं भावयेद्विद्वान् सर्वावयवसंयुतम् ।
अमृतोदकसंपूर्णैः कलशैर्हेमभूषितैः ॥ ४४

दिङ्नारीणां करधृतैरात्मानमभिषेचयेत् ।
अथ सोऽहमिति प्रोक्त्वा देहमुज्जीवितं स्मरेत् ॥ ४५

भूतशुद्धिं विधायेत्थं ततःप्राणान्प्रतिष्ठयेत् ।
प्राणप्रतिष्ठामन्त्रस्य ब्रह्मविष्णुमहेश्वराः ॥ ४६

ऋषय ऋग्यजुःसामाथर्वाणि छन्द उच्यते ।
प्राणशक्तिः परा देवी देवता आं प्रकीर्तितम् ॥ ४७

शक्तिर्माया कीलकं च क्रों देव कमलोद्भव ।
प्राणानां च प्रतिष्ठार्थे नियोगश्च [illegible]म् ॥ ४८

कवर्गं हृदये न्यस्य चवर्गं शिरसि न्यसेत् ।
टवर्गं च शिखायां च तवर्गं कवचं न्यसेम् ॥ ४९

पवर्गं न्यस्य नेत्रेषु यवर्गं चास्त्रमुच्यते ।
भूर्भुवःस्वः सुवः ? प्रोक्त्वा ततो दिग्बन्धमाचरेत् ॥ ५०

रक्तपद्मासनां पुष्पबाणामिक्षुधनुर्धराम् ।
पाशाङ्कुशधरां देवीं प्राणशक्तिं स्मरेद्बुधः ॥ ५१

आं ह्रीं क्रों क्रों तथा ह्रीं च वदेदां हंसं ततः परम् ।
अमुष्य प्राणा इत्युक्त्वा इह प्राणा वदेद्बुधः ॥ ५२

अमुष्य जीवमुच्चार्य इह स्थित इतीरयेत् ।
अमुष्य सर्वेन्द्रियाणि त्वङ्मनश्चक्षुरुच्यते ॥ ५३

श्रोत्रजिह्वाघ्राणवाक्पाणिपादं तु संवदेत् ।
पायुशब्दं समुच्चार्योपस्थशब्दं समुच्चरेत् ॥ ५४

वुद्ध्यहङ्कारचित्तानि इहशब्दं समुच्चरेत् ।
सुखं चिरं च तिष्ठन्तु स्वाहामन्त्रं समुद्धरेत् ॥ ५५

त्रिवारं च जपेन्मन्त्रं सर्वमन्त्रोत्तमोत्तमम् ।
प्राणप्रतिष्ठां कृत्वैवं पश्चान्न्यासं समाचरेत् ॥ ५६

इति श्रीमहालक्ष्मीकल्पे नारायणब्रह्मोमामहेश्वर-
संवादे प्रत्यक्षसिद्धिप्रदे महालक्ष्मी -
रत्न (कल्प) कोशाख्ये
दशमोऽध्यायः ॥

## ॥ एकादशोऽध्यायः ॥

पूर्वोक्तन्यासजालानि सम्यक् कृत्वा तु देशिकम् ।
नत्वा न्यसेत्ततो धीमान् तत्तन्मन्त्रेण मन्त्रवित् ॥ १

मातृकाणामक्षराणि तत्तत्स्थानेषु विन्यसेत् ।
श्रीकण्ठमातृकां चापि कामरत्यादिमातृकाम् ॥ २

मातृकामनिवृत्याख्यां लघुषोढाह्वयं ततः ।
महाषोढाह्वयं न्यासं तथा भूतलिपिं न्यसेत् ॥ ३

पश्चात्कामकलां न्यस्य श्रीचक्रन्यासुत्तमम् ।
वक्ष्यमाणप्रकारेण न्यासजालान्यसेद् वुधः ॥ ४

एवं न्यासं चरित्वा तु पश्चादुच्छ्वासपूजनम् ।
उच्छ्वासरूपामजपां तथा निःश्वासरूपिणीम् ॥ ५

*षट्शतोत्तरसाहस्रमेकविंशतिसंस्मृताम् ।
निवेदयामि गायत्रीं साङ्गवरणकश्रिवः ॥ ६

इति संकल्प्य विधिवत् पूर्वं च ध्यानमाचरेत् ।
बिन्दुमध्यस्थताक्ष्र्यस्य स्कन्धसंरूढवक्षसि ॥ ७

द्विसहस्रं महालक्ष्म्याः दीयते प्रीतिरस्तु ते ।
श्रीपतेस्तु सहस्रं वै वैनतेयस्य षट्शतम् ॥ ८

---

* एकविंशतिसाहस्रषट्शताधिकरूपिणाम्
अजपानिवेदनक्रमे भेदः दृश्यते ।

त्रिकोणपूर्वकोणस्थवागीशीकमलासन ।
सहस्रं दीयते तुभ्यं गृहीत्वा वरदो भव ॥ ९

पञ्चकोणाग्रकोणस्थे महात्रिपुरसुन्दरि ।
त्रिकोणदक्षकोणस्थपार्वत्यर्धशरीरिणे ॥ १०

निवेदयामि गायत्रीसहस्रं वरदो भव ।
त्रिकोणोत्तरकोणस्थभूवराहाय विष्णवे ॥ ११

निवेदयामि गायत्रीसहस्रं वरदो भव ।
पञ्चकोणाग्रकोणस्थे महात्रिपुरसुन्दरि ॥ १२

निवेदयामि गायत्रीसहस्रं ते महेश्वरि ।
पञ्चकोणोत्तरस्थे ते सिद्धलक्ष्मि जयप्रदे ॥ १३

निवेदयामि गायत्रीसहस्रं सिद्धिदा भव ।
वाणाश्रपूर्वकोणस्थे महामातङ्गि मोहिनि ॥ १४

निवेदयामि गायत्रीसहस्रं सिद्धिदा भव ।
बाणाश्राग्नेयकोणस्थे भुवनेश्वर्यहं तव ॥ १५

निवेदयामि गायत्रीसहस्रं सिद्धिदा भव ।
वाणाश्रदक्षकोणस्थे महावाराह्यहं तव ॥ १६

निवेदयामि गायत्रीसहस्रं शत्रुनाशिनि ।
बाणाश्रान्तरकोणस्थ रतिमन्मथ मोहन ॥ १७

निवेदयामि गायत्रीशतं पञ्च गृहाण ते ॥ १८

वसुधारे शङ्खनिधे तुभ्यं पञ्चशतं-मया ।
दीयते सर्वदैश्वर्यं देहि मे श्रियमुत्तमाम् ॥ १९

स्वर्णदासहित श्रीमन् स्वर्णाकर्षकर प्रभो ।
निवेदयामि ते पञ्चशतं स्वर्णप्रदो भव ॥ २०

महागणेश ते पञ्चशतं दत्तं मयाधुना ।
सर्वविघ्नापदं छिन्धि सर्वैश्वर्यं ददस्व मे ॥ २१

वसुमत्याऽर्थनाथाय ते पद्मनिधये मया ।
दत्तं पञ्चशतं देव सर्वैश्वर्यप्रदो भव ॥ २२

दीयते वासुदेवाय तथा सङ्कर्षणाय च ।
प्रद्युम्नायानिरुद्धाय द्विशतं द्विशतं पृथक् ॥ २३

ऋद्धे समृद्धेऽन्नपूर्णेशि राज्यदे द्विशतं मया ।
वसुकोणे विदिक्कोणस्थिते दत्तं दयां कुरु ॥ २४

वागीश्वर्या नकुल्याश्च हसन्त्याश्च शतं शतम् ।
कृत्यायाः कान्तिविद्याया दत्तं प्रीता सदास्तु मे ॥ २५

शतं तु मदनावत्यास्तद्द्रवायाः शतं मया ।
द्राविण्याश्च महादेव्याः दत्तमस्तु पृथक् पृथक् ॥ २६

अणिमाद्यष्टसिद्धे ते बालिकौघाष्टशक्तिके ।
निवेदयामि गायत्रीशतं तुभ्यं पृथक् पृथक् ॥ २७

श्रियादिशक्ते पञ्चाशत् तुभ्यं दत्तं पृथक् पृथक् ।
अजपानामगायत्र्याः सर्वभाग्यप्रदा भव ॥ २८

देवेश्वराद्या दिक्पालास्तथा ब्राह्म्यादिमातृका: ।
अजपानामगायत्र्या: पञ्चषट्कं पृथक् पृथक् ॥ २९

वैनतेय मया दत्तं शतं तेऽस्तु सुदर्शन ।
पञ्चवक्त्र हरे तुभ्यं विष्वक्सेन ददाम्यहम् ॥ ३०

दमकादिगजेन्द्रेभ्यो द्विशतं दत्तमद्य वैं ।
शार्ङ्ग्यादित्रयस्यापि त्रिशतं दत्तमस्तु च ॥ ३१

शास्ता (तृ) दुर्गादिसर्वेभ्यो द्विशतं प्रीतये ददे ।
हंस:सोऽहं समुद्धृत्य सुविद्महेति संवदेत् ॥ ३२

सोऽहं हंसोऽहमित्युक्त्वा हं? सुधीमहि संवदेत् ।
हंस:सोऽहं समुद्धृत्य प्रकारं चोदयादिति ॥ ३३

हंसगायत्रमुद्दिष्टं परब्रह्मपदप्रदम् ।
प्राणायामं तत: कृत्वा षडङ्गं च विधानवित् ॥ ३४

जपेदष्टोत्तरशतं श्रीगायत्रीं महामते ।
तत: सूर्यमुपस्थाय साष्टाङ्गं प्रणमेत् प्रिय ॥ ३५

------

एवं कृत्वा मूलमन्त्रं जपेत्पश्चाद्विचक्षण: ।
सप्तकोटिमहामन्त्रनाथं श्रीषोडशार्णकम् ॥ ३६

जपेल्लक्षं विशेषज्ञ: साक्षाद्वैश्रवणो भवेत् ।
त्रिलक्षाच्च त्रिमूर्तीनां प्रतिर्भवति तत्वत: ॥ ३७

वेदलक्षजपात्तात सर्ववेदार्थतत्ववित् ।
वाणलक्षाच्च पञ्चानां विद्यानां सिद्धिरुज्ज्वला ॥ ३८

षडाननस्य शक्तिः स्यात् षल्लक्षाज्जापकस्य तत् ।
सप्तर्षित्वं च वै तात सप्तलक्षाच्च मन्त्रवित् ॥ ३९

अष्टलक्षाद्वसुत्वं च नवलक्षाद्ग्रहाधिपः ।
दशलक्षात् त्रिमूर्तित्वं लक्षादेकादशात्ततः ॥ ४०

वाग्देवित्वं लभेत्तात्त द्वादशात्कमलासन ।
त्रयोदशाच्छिवत्वं च शिवात्वं च चतुर्दशात् ॥ ४१

लक्षात्पञ्चदशात्तात तत्स्वरूपं व्रजेद्बुधः ।
षोडशश्रीस्वरूपत्वं ब्रह्मत्वं च प्रयच्छति ॥ ४२

इतःपरं फलं तात नैव लोकेऽस्ति सर्वदा ।
पुरश्चर्यां विधायेत्थं पश्चात्काम्यं प्रसाधयेत् ॥ ४३

इति श्रीमहालक्ष्मीकल्पे नारायणब्रह्मोमामहेश्वर-
संवादे प्रत्यक्षसिद्धिप्रदे महालक्ष्मी -
रत्न (कल्प) कोशाख्ये
एकादशोऽध्यायः ॥

# द्वादशोऽध्यायः ।

द्वादशावरणं पूर्वं चक्रराजमुदीरितम् ।
इदानीं संप्रवक्ष्यामि नव(सा)धाऽऽवरणक्रमम् ॥ १

अर्घ्यान्तं पूर्ववत्कृत्वा पश्चात्तर्पणमाचरेत् ।
जले श्रीचक्रमालिख्य धेनुमुद्रां प्रदर्श्य च ॥ २

बिन्दौ तार्क्ष्यसमारूढविष्णुवक्षःस्थले श्रियम् ।
मूलेन च कलावारं तर्पयेच्छ्रीपतिं तथा ॥ ३

महातार्क्ष्यं महातल्पं पश्चादावरणं तथा ।
तर्पणस्य(?) महाबुद्धे तत्क्रमं ते ब्रवीम्यहम् ॥ ४

सन्तर्प्य पीठशक्त्यन्ते चतुरस्रस्य बाह्यतः ।
दमकं शललं चैव गुग्गुलं च कुरण्डुलम् ॥ ५

इन्द्रमग्निं यमं चैव निर्ऋतिं वरुणं तथा ।
वायुं सोमं तथेशानं तर्पयेत्पुरुषोत्तमम् ॥ ६

ब्राह्मीं माहेश्वरीं चैव कौमारीं वैष्णवीं तथा ।
वाराहीं तर्पयेदैन्द्रीं चामुण्डां चण्डिकां तथा ॥ ७

रेखायां प्रथमायां तु इन्द्राद्यैरष्टमातृकाः ।
द्वितीयायां तु रेखायां शार्ङ्ग्यादित्रिमूर्तिकम् ॥ ८

श्रियादीस्तर्पयेदेवीःतृतीयायां महामते ।
सर्वसंमोहने चैव प्रकटादिगुणैर्युताम् ॥ ९

परां सन्तर्प्य संक्षोभिणीं सन्दर्श्य तत्परम् ।
कलादलान्तरालेषु शब्दा कर्षणिकां तथा ॥ १०

अहङ्काराकर्षिणीं च शब्दाकर्षणिकां तथा ।
स्पर्शाकर्षणरूपां च रूपाकर्षणरूपिणीम् ॥ ११

रसाकर्षणरूपां च गन्धाकर्षणरूपिणीम् ।
चित्ताकर्षणरूपां च धैर्याकर्षणरूपिणीम् ॥ १२

स्मृत्याकर्षणरूपां च नामाकर्षणरूपिणीम् ।
बीजाकर्षणरूपां च आत्माकर्षणरूपिणीम् ॥ १३

अमृताकर्षणीं नित्यां शरीराकर्षणीमपि ।
कलादलेषु कामेशीं तथाच भगमालिनीम् ॥ १४

नित्यक्लिन्नां च भेरुण्डां तर्पयेद्वह्नि वासिनीम् ।
महावज्रेश्वरीं देवीं शिवदूतीं च तर्पयेत् ॥ १५

त्वरितां सुन्दरीं नित्यां तथा नीलपताकिनीम् ।
विजयां मङ्गलां ज्वालामालिनीं च विचित्रिकाम् ॥ १६

महानित्यां च वै तात नित्याः षोडशिकाः स्मृताः ।
सर्वाशापूरके चक्रे षोडशारे परेश्वरीम् ॥ १७

योगिनीं गुप्तसंयुक्तां द्राविणीं च प्रदर्शयेत् ।
वसोर्दलान्तरालेषु अनङ्गकुसुमां तथा ॥ १८

अनङ्गमेखलां देवीं अनङ्गमदनां तथा ।
तथैवानङ्गमदनातुरां मदनरेखकाम् ॥ १९

अनङ्गवेगिनीं देवीं अनङ्गाङ्कुशसंज्ञिकाम् ।
अनङ्गमालिनीं देवीं तर्पयेत्सर्वमोहिनीम् ॥ २०

दलेष्वष्टसु वै बह्मन्नणिमादींश्च तर्पयेत् ।
संक्षोभणे गुप्ततरायोगिनींयुतसुन्दरीम् ॥ २१

आकर्षणीमहामुद्रां दर्शयेन्मन्त्रवित्तमः ।
मन्वश्रस्यान्तरालेषु सर्वसङ्क्षोभिणीं तथा ॥ २२

सर्वविद्राविणीशक्तिं सर्वाकर्षणिकां तथा ।
सर्वाह्लादकरीं शक्तिं सर्वसम्मोहकारिणीम् ॥ २३

सर्वसंस्तम्भिनीं सर्वजृम्भिणीं वश्यकारिणीम् ।
सर्वरञ्जनिकां सर्वोन्मादिनीमर्थसाधिनीम् ॥ २४

सर्वसम्पत्तिकरिणीं सर्वमन्त्रमयीं तथा ।
सर्वद्वन्द्वक्षयकरीं तर्पयेन्मन्त्रवित्तमः ॥ २५

मन्वश्रे रेणुकां दुर्गां भद्रां वागीश्वरीमयीम् ।
नकुलीं हसितालपां बालिकां विमलां तथा ॥ २६

कमलां वनमालां च भूषिकां मलिकां तथा ।
शाङ्करीं वनमालां च तर्पयेन्मन्त्रवित्तरः ॥ २७

सर्वसौभाग्यदे चक्रे तर्पयेत्परवासिनीम् ।
संप्रदायगुणैर्युक्तां वश्यमुद्रां प्रदर्शयेत् ॥ २८

सर्वसिद्धिप्रदां देवीं सर्वसम्पत्प्रदां तथा ।
सर्वप्रियकरीं देवीं सर्वमङ्गलकारिणीम् ॥ २९

सर्वकामप्रदां देवीं सर्वदुःखविमोचनीम् ।
सर्वमृत्युप्रशमनीं सर्वविघ्ननिवारिणीम् ॥ ३०

सर्वाङ्गसुन्दरीं देवीं सर्वसौभाग्यदायिनीम् ।
दशारस्यान्तरालेषु तर्पयेत्साधकोत्तमः ॥ ३१

ऋद्धिं तार्क्ष्यं समृद्धिं च हरिं पञ्चमुखं प्रभुम् ।
कान्तिं सुदर्शनं चक्रं तर्पयेन्मदनावतीम् ॥ ३२

आपदुद्धारणं देवं तथैव च मदद्रवाम् ।
महाशास्तं द्राविणीं च कामं क्षोभकरीं ततः ॥ ३३

कन्दर्पबन्धिनीं चैव मन्मथं मोहिनीं तथा ।
मत्स्यकेतुं तथाकर्षकरीं सन्तर्पयेद्भवम् ॥ ३४

सर्वार्थसाधके चक्रे कुलोत्तीर्णगणैर्युताम् ।
परां श्रियं तु सन्तर्प्योन्मादमुद्रां प्रदर्शयेत् ॥ ३५

सर्वज्ञां सर्वशक्तिं च सर्वैश्वर्यप्रदायिनीम् ।
सर्वज्ञानमयीं शक्तिं सर्वव्याधिविनाशिनीम् ॥ ३६

सर्वाधारस्वरूपां च सर्वपापहरां तथा ।
सर्वानन्दमयीं शक्तिं सर्वरक्षास्वरूपिणीम् ॥ ३७

सर्वेषामीप्सितफलप्रदां सन्तर्पयेद्बुधः ।
अन्तर्दशारे च रतिं मन्मथं तर्पयेद्बुधः ॥ ३८

वसुधारां शङ्खनिधिं महालक्ष्मीं कृपाकराम् ।
वासुदेवं जगद्योनिं तथा सङ्कर्षणं विभुम् ॥ ३९

प्रद्युम्नं मोहनादेव्या वसुदाम्न्याऽनिरुद्धकम् ।
सुवर्णाकर्षणं देव्या स्वर्णदात्र्या श्रियां तथा ॥ ४०

महागणं वसुमतीं तथा पद्मनिधिं प्रभुम् ।
प्रीत्या सह वसन्तं च तर्पयेन्मन्त्रवित्तमः ॥ ४१

सर्वरक्षाकरे चक्रे निगर्भाभिःसमावृताम् ।
परमालां(म्बां) च सन्तर्प्य दर्शयेच्च महाङ्कुशम् ॥ ४२

वशिनीं चैव कामेशीं मोदिनीं विमलां तथा ।
अरुणां जयिनीं चैव सर्वेशीं कौलिनीं तथा ॥ ४३

अष्टकोणान्तरालेषु तर्पयेन्मन्त्रवित्तमः ।
कोणेषु त्रिपुरां सिद्धलक्ष्मीं मातङ्गकन्यकाम् ॥ ४४

भुवनेशीं च वाराहीं मत्तदां राज्यदायिनीम् ।
पद्मावतीं महाभागां तर्पयेन्मन्त्रतत्त्ववित् ॥ ४५

सर्वरोगहरे चक्रे रहस्याभिः समावृताम् ।
परां सिद्धां च सन्तर्प्य त्रिखण्डां दर्शयेद्बुधः ॥ ४६

कामेश्वरीं च वज्रेशीं तथा च भगमालिनीम् ।
अन्तरालेषु सन्तर्प्य वागीशीकमलासनम् ॥ ४७

अर्धनारीश्वरं शम्भुं भूवराहं मदंशकम् ।
तर्पयेच्च त्रिकोणेषु तत्तन्मूलेन मन्त्रवित् ॥ ४८

सर्वसिद्धिप्रदे चक्रे युक्तामतिरहस्यकैः ।
पराम्बां तर्पयेत्तत्र बीजमुद्रां प्रदर्शयेत् ॥ ४९

बिन्दोश्च परितो देवीः सर्वज्ञाद्याः सुशोभनाः ।
तथा षोडश देवीश्च तर्पयेन्मनुवित्तमः ॥ ५०

बिन्दुमध्ये महाताक्ष्यं तस्योपरि च मामपि ।
मम वक्षःस्थले देवीं ध्यात्वा मूलेन तर्पयेत् ॥ ५१

सर्वानन्दमये चक्रे महापरमचिच्छ्रियम् ।
परापराभिगुप्ताभिर्वृतां सन्तर्पयेद् बुधः ॥ ५२

महायोनिं प्रदर्श्याथ खेचर्या योजयेच्चितिम् ।
एवं सन्तर्प्य विधिवदेतदावरणं क्रमात् ॥ ५३

चक्रस्थां वन्दनं कुर्यात् तत्तद्ध्यानपुरःसरम् ।
माता दूर्वादलश्यामाः शाङ्कर्य असितप्रभाः ॥ ५४

नारायणाद्याः श्यामाभाः पीताभा ब्रह्मशक्तयः ।
तप्तकाञ्चनवर्णाभाः श्रियाद्याः कमलोद्भव ॥ ५५

जपाकुसुमसङ्काशाः कामाकर्षणिकादयः ।
बन्धूककुसुमप्रख्याः कामेश्वर्यादयस्तथा ॥ ५६

अनङ्गकुसुमाद्यास्तु विद्रुमाभाः प्रकीर्तिताः ।
अणिमाद्यारुणाः प्रोक्ताः शक्तयः सर्वसिद्धयः ॥ ५७

सर्वसङ्क्षोभिणीशक्तिप्रमुखा विद्रुमारुणाः ।
रेणुकाद्या महादेव्यो रक्ता मुक्तामणिप्रभाः ॥ ५८

ऋद्ध्यादिवैनतेयाद्या पीतनीलारुणप्रभाः ।
सर्वज्ञाद्याः सिता ध्येयाः कनकाभा रतिस्तथा ॥ ५९

वसुधाराशङ्खनिधी लक्ष्मीः पीतप्रभा स्मृता ।
वासुदेवः सितो ध्येयः सिताभा च सरस्वती ॥ ६०

सङ्कर्षणश्च पीताभो मोहना चारुणप्रभा ।
प्रद्युम्नस्तु तथाभ्राभः स्वर्णाभा वसुदायिनी ॥ ६१

इन्द्रनीलमणिप्रख्यश्चानिरुद्धः प्रतापवान् ।
स्वर्णदा हेमवर्णाभा रक्तः कनकभैरवः ॥ ६२

विभूतिः कनकप्रख्या अतिरक्तो गणेश्वरः ।
वसुमती च मुक्ताभा श्वेतः पद्मनिधिः प्रभुः ॥ ६३

प्रीतिश्चैव वसन्तश्च धवलौ समुदाहृतौ ।
वशिनीप्रमुखा देव्यो रक्ताभाः परिकीर्तिताः ॥ ६४

त्रिपुरा रक्तवर्णाढ्या सिद्धश्रीः कनकप्रभा ।
इन्द्रनीलमणिश्यामा मातङ्गी सर्वसुन्दरी ॥ ६५

भुवनेशी तथा रक्ता वाराही श्यामवर्णिनी ।
अन्नपूर्णा तथा रक्ता स्वर्णाभा राज्यदायिनी ॥ ६६

पद्मावती तथा रक्ता कामेशी रक्तवर्णिनी ।
रक्ता वज्रेश्वरी ध्येया धवला भगमालिनी ॥ ६७

हिमकाञ्चनसङ्काशौ वागीशीकमलासनौ ।
उमामहेश्वरौ ज्ञेयौ तप्तचामीकरप्रभौ ॥ ६८

इन्द्रनीलमणिप्रख्यौ भूवराहौ महामते ।
पञ्चवर्णो महाताक्ष्यः सर्वसिद्धिप्रदायकः ॥ ६९

अहं नीलाम्बुदश्यामः श्रीमन्नारायणः स्मृतः ।
तप्तजाम्बूनदप्रख्या महालक्ष्मीः प्रकीर्तिता ॥ ७०

एवं ध्यात्वा नमस्कुर्यात् सन्ध्याकाले विशेषवित् ॥ ७१

इति श्रीमहालक्ष्मीकल्पे नारायणब्रह्मोमामहेश्वर-
संवादे प्रत्यक्षसिद्धिप्रदे महालक्ष्मी -
रत्न (कल्प) कोशाख्ये
द्वादशोऽध्यायः ॥

## ॥ त्रयोदशोऽध्यायः ॥

हृदब्जे भावयेच्चक्रं सर्वचक्रोत्तमोत्तमम् ।
यस्य विज्ञानमात्रेण करस्थाः सर्वसिद्धयः ॥ १

बिन्दुं पूर्वं समालिख्य शक्तिं तस्योपरि न्यसेत् ।
शक्त्या शक्तिं विनिर्भिद्य ऊर्ध्वकोणं तु कारयेत् ॥ २

शक्त्यन्तरेण मां शक्तिं अधःकोणं प्रकारयेत् ।
त्रिकोणमष्टकोणं च भविष्यति महामते ॥ ३

ऊर्ध्वस्थितं त्रिकोणस्य रेखाधो या तु वर्तते(?)
अधस्त्रिकोणमूर्ध्वे तु शक्त्याकारतया लिखेत् ॥ ४

अधःस्थितत्रिकोणस्य रेखा पूर्वे तु या भवेत् ।
तया पूर्वे त्रिकोणं तु कारयेच्चक्रतत्ववित् ॥ ५

तिर्यग्रेखास्त्रिकोणस्य पूर्वपश्चिममध्यतः ।
विलिख्य मर्म मध्यस्था ऊर्ध्वरेखा नियोजयेत् ॥ ६

अधस्त्रिकोणयोर्मध्ये तिर्यग्रेखां विलिख्य तु ।
अधोमर्मस्थसूत्रेण त्रिकोणद्वयमालिखेत् ॥ ७

एवं दशारमुत्पन्नं तद्बाह्ये दशकोणकम् ।
पूर्वद्वितीयसूत्रेण अधः शक्तिं समालिखेत् ॥ ८

ऊर्ध्वमर्मस्थसूत्रेण त्रिकोणद्वयमालिखेत् ।
अधोमर्मस्थसूत्रेण तथा शक्तिद्वयं लिखेत् ॥ ९

पूर्वपश्चिमभागस्थतिर्यग्रेखाद्वयेन तु ।
तृतीयसूत्रमर्मस्थरेखां संयोजयेद् बुधः ॥ १०

एवं मन्वश्रमुत्पन्नं तद्बहिर्नागपत्रकम् ।
षोडशारं च तद्बाह्ये मेखलात्रयसंयुतम् ॥ ११

भूगृहत्रयसंयुक्तं चतुर्द्वारोपशोभितम् ।
एवमेतन्महाचक्रं महालक्ष्मीमयं परम् ॥ १२

सृष्टिक्रमेण कथितं सर्वसौभाग्यकारकम् ।
क्लेदनं द्रावणं चैव क्षोभणं मोहनं तथा ॥ १३

[illegible]दारिद्र्यशमनं सर्वदुःखार्तिनाशनम् ।
शा[illegible]पुष्टिधनारोग्यमन्त्रसिद्धिकरं परम् ॥ १४

भोगदं मोक्षदं चैव खेचरत्वप्रवर्तकम् ।
सर्वसम्पत्करं चैव सर्वकार्यार्थसाधकम् ॥ १५

सर्वावेशकरं तात सर्वश्रेयःप्रवर्तकम् ।
सर्वतत्वमयं चैव सर्वतीर्थमयः (यं) पुनः ॥ १६

सर्वव्रतमयं चैव सर्वाव्रतमयं तथा ।
सर्वदुःखप्रशमनं सर्वशोकनिवारणम् ॥ १७

सर्वोन्मादकरं चैव सर्वाह्लादनकारणम् ।
सर्वदौर्भाग्यशमनं सर्वविघ्ननिवारणम् ॥ १८

सर्वकामप्रदं चक्रं सर्वार्थपरिपूरकम् ।
रौद्राभि[illegible] ॥ १९

परसिद्ध्याकर्षणं च पराज्ञाकर्षणं तथा ।
परसैन्यस्तम्भकरं शत्रुस्तम्भकरं तथा ॥ २०

महाचमत्कारकरं महाबुद्धिप्रवर्तकम् ।
महावाणीकरं देवीमहासौभाग्यदायकम् ॥ २१

महाज्वरहरं पुण्यं महाविषहरं तथा ।
महामृत्युप्रशमनं महाभयविनाशनम् ॥ २२

महावश्यकरं चक्रं महावेधकरं पुनः ।
महापुरक्षोभकरं महासुखशुभप्रदम् ॥ २३

महालक्ष्मीमयं सर्वमहामङ्गलदायकम् ।
महाप्रभावसंयुक्तं महापातकनाशनम् ॥ २४

एवमेतस्य चक्रस्य प्रभावो वर्णितो मया ।
न शक्यते वर्णयितुं कल्पकोटिशतैरपि ॥ २५

सृष्टिचक्रमिति ख्यातं सर्वचक्रोत्तमोत्तमम् ।
संहारचक्रं वक्ष्यामि सर्वसौभाग्यदायकम् ॥ २६

[1]व्यासे देवीकृते तत्तमललविगते चापभागे(ल्प)ह्यसूत्रात्
कृत्वापर्योस्तिदं ते रा( ?) मशलमभितो पातयोस्तोयभागात् ।
धान्यांशान् देविमार्ज्य प्रथयतु वरुणग्राणसूत्रद्वयानि
वाक्यांतं रोधिगानं विदमसिधुगिगंदिव्ये( ?) सूनुश्चिरंप्राक् ॥ २७

1. पद्यमिदं दुरधिगमम् ।

श्रूयतां चक्रनिर्माणं ते वच्मि कृपयाऽनघ ।
तदर्थं तात कुर्वीत त्रिहस्तं दक्षिणोत्तरम् ॥ २८

द्विसप्तत्यङ्गुलं ज्ञेयं प्रमाणं सर्वतः समम् ।
अष्टाङ्गुलं भूग्र(गृ)हाणां षोडशारस्य वै दश ॥ २९

नवाङ्गुलं नागदलमूर्ध्वाधः कमलासन ।
सप्तविशंत्यङ्गुलं स्यात् श्रीचक्रस्य तु बाह्यतः । ३०

चत्वारिंशं(?) च पञ्चोर्ध्वं चक्रमानमुदाहृतम् ।
चत्वारिंशत्तथाष्टोर्ध्वमंचा(?) कुर्याद्विचक्षणः ॥ ३१

वृत्तमारभ्य रेखा तु प्रथमा च षडङ्गुलम् ।?
द्वितीयं रससंख्याकं तृतीयं पञ्चमाङ्गुलम् ॥ ३२

चतु(र्थ्या) रङ्गुलसंख्याकं पञ्चसूत्रत्रयाङ्गुलम् ।
षष्ठे चतुष्टयं विद्यात् चतुर्थे चतुरानन ॥ ३३

अष्टाविंशद्वयं विद्यात् _______ ।
एकोनविंशद्वितयं पञ्चमस्य तु पार्श्वयोः ॥ ३४

षष्ठे षोडशयुग्मं तु सप्तमे च न मार्जयेत् ।
अष्टमस्य तु पार्श्वे तु पञ्चमं च प्रकीर्तितः(?) ॥ ३५

नवमस्य तु सूत्रस्य पार्श्वे पार्श्वे तृतीयकम् ।
एवं संमार्ज्य वै रेखां तत्तद्रेखासु योजयेत् ॥ ३६

ऊर्ध्ववृत्रे तृतीयं तु योजयेच्च? तत्ववित् ।
द्वितीयसूत्र नवमं? सूत्रस्याद्योनियोजयेत् ॥ ३७

(द्वितीयसूत्रं नवमसूत्रस्याधो नियोजयेत् ॥)

चतुर्थं चाष्टमे योज्यं पञ्चमं सप्तमे तथा ।
षट्सूत्रे प्रथं(?) विद्यात्पञ्चशक्तिरिदं स्मृतम् ॥ ३८

अधोवृत्ते सप्तमं तु योजनीयो महामते ।
अष्टमं प्रथमे विद्यात् षष्ठसूत्रं द्वितीयके ॥ ३९

तृतीयनवमं ब्रह्मन् योजनीयात्(?) प्रयत्नतः ।
चतुर्वह्निरिति प्रोक्तं सर्वत्र समरेखकम् ॥ ४०

अष्टाविंशतिमर्माणि चतुर्विंशतिसन्धयः ।
वह्निः पद्मद्वयं कुर्यात् अष्टषोडं भकच्छपम्? । ४१

गुणवृत्तं ततः कुर्यात् चतुरस्रं च तद्बहिः ।
चतुर्द्वारसमायुक्तं एवं स्याच्चक्रमुत्तमम् ॥ ४२

उभयोराकृतिर्बिन्दुस्तस्मादैक्यं विदुर्बुधाः ।
एतस्मादेव वै चक्रात् सृष्टिस्थितिलयक्रियाः ॥ ४३

त्रिखण्डं मातृकाचक्रं सोमसूर्यानलात्मकम् ।
त्रिकोणं बैन्दवं सौम्यमष्टकोणेन मिश्रितम् ॥ ४४

दशारयुग्मं मन्वश्रं वह्निरूपं महामते ।
अष्टपत्रं कलापद्मं चतुष्कोणं च भानुमत् ॥ ४५

एतत्प्रभावादिन्द्राद्या वसवोऽष्टौ मरुद्गणाः ।
ये ये समृद्धा लोकेऽस्मिन् ते लक्ष्मीचक्रसेवकाः ॥ ४६

पुरत्रयं च चक्रस्य सोमसूर्यानलात्मकम् ।
पुरत्रये महेशानी तस्मिन् लक्ष्मीः प्रतिष्ठिता ॥ ४७

मायास्वरूपिणी शक्तिः लक्ष्म्या यवनिका स्मृता ।
मोहिनी त्रिपुरा चेति विश्रुता कमलासन ॥ ४८

मद्रूपा मोहिनी देवी तस्माल्लक्ष्मीर्मयि स्थिता ।
तच्चक्रं महापुण्यं विष्णुलक्ष्मीमयं परम् ॥ ४९

त्रिकोणमष्टकोणं च दशकोणद्वयं तथा ।
चतुर्दशारं चैतानि लक्ष्मीचक्राणि पञ्च च ॥ ५०

तथा चाष्टदलं पद्मं वृत्तं षोडशपत्रकम् ।
चतुरस्त्रं च चत्वारि मम चक्राण्यनुक्रमात् ॥ ५१

त्रिकोणमष्टकोणं च दशकोणद्वयं तथा ।
मनुकोणं चतुष्कोणं कोणचक्राणि षट् क्रमात् ॥ ५२

मूलाधारं तथा स्वाधिष्ठानं च मणिपूरकम् ।
अनाहतं विशुद्ध्याख्यं आज्ञाचक्रं विदुर्बुधाः ॥ ५३

मूलाधारे महीं विद्यात् स्वाधिष्ठाने कमेव च ।
मणिपूरेऽनलं विद्यान्मरुतं चाप्यनाहते ॥ ५४

आकाशं तु विशुद्धौ तु आज्ञायां च मनः स्मृत(:)म् ।
गन्धादयश्च तन्मात्रास्तथा चक्रेष्ववस्थिताः ॥ ५५

एकादशेन्द्रियाः(?) प्रोक्ता मनस्तत्वस्वरूपतः ।
एकविंशतितत्वानि प्रोक्तानि चतुरानन ॥ ५६

माया च म(व्य)म विद्या च महेशश्च हरिस्तथा ।
मायया सहितो रुद्रो जीवात्मेति च विश्रुतः ॥ ५७

विद्यया सहितश्चाहं परं ब्रह्मेति गीयते ।
पञ्चविंशतितत्वानि तव प्रोक्तानि तत्त्वतः ॥ ५८

षड्विंशतिकलाकारा तत्वातीता परा स्मृता ।
तस्माच्चन्द्रकला प्रोक्ता श्रीश्चिदानन्दरूपिणी ॥ ५९

एवं हत्कमले चक्रं परिभाव्य प्रपूरयेत् ।
बिन्दौ त्रिकोणे (द्वा) चाष्टारे तथाच दशयुग्मके ॥ ६०

नागाब्जे च कलाब्जे च चतुरस्रत्रयेऽपि च ।
तत्रस्थदेवताः पूज्याः सृष्टिमार्गक्रमेण वै ॥ ६१

अन्तरालस्थिता देवीः पूजयेद्भूगृहादितः ।
बिन्दुपर्यन्तमभ्यर्च्य चिति सर्वास्तु योजयेत् ॥ ६२

इति श्रीमहालक्ष्मीकल्पे नारायणब्रह्मोमामहेश्वर-
संवादे प्रत्यक्षसिद्धिप्रदे महालक्ष्मी -
रत्न (कल्प) कोशाख्ये
त्रयोदशोऽध्यायः ॥

## ॥ चतुर्दशोऽध्यायः ॥

हृदब्जे पूज्य सर्वेशीं बाह्यपूजां तु कारयेत् ।
श्रीचक्रं पूर्ववत्कृत्वा मेरुप्रस्तारतोऽपि वा ॥ १

अर्धमेरुप्रकारेण भूप्रस्तारेण वा लिखेत् ।
अधो भूगृहमालिख्य कलाश्रं च तदुन्नतम् ॥ २

तदुन्नतं नागदलं मन्वश्रं च तदुन्नतम् ।
तदुन्नतं दशारं च दशारं च तदुन्नतम् ॥ ३

अष्टकोणं तदूर्ध्वं च तदूर्ध्वं च त्रिकोणकम् ।
सर्वोन्नतश्च बिन्दुः स्यात् एवं मेरुक्रमो भवेत् ॥ ४

मन्वश्रं च समारभ्य समानं बैन्दवे लिखेत् ।
अधोन्नतं च भूम्यन्तं अर्धमेरु इति स्मृतम् ॥ ५

सर्वत्रैव समानं स्यात् उन्नतादिविवर्जितम् ।
भूप्रस्तार इति ख्यातं त्रिप्रकारं प्रकीर्तितम् ॥ ६

अत्युत्कृष्टतमो मेरुरर्धमेरु (तरं) स्तरो भवेत् ।
उत्कृष्टं भूगृहं विद्यात् चक्रमेवं तु कारयेत् ॥ ७

पादप्रक्षालनं कृत्वा प्राणायामत्रयात्मकम् ।
आसनं भूतशुद्ध्यादि गुरुवन्दनपूर्वकम् ॥ ८

सङ्कल्प्य न्यासजालानि कुर्यात्सम्यगतन्द्रितः ।
त्रिकोणवृत्तभूबिम्बं कृत्वा तत्राक्षतादिभिः ॥ ९

अर्चयित्वा तु कलशं शुद्धवार्या(?) प्रपूरयेत् ।
गन्धाक्षतैरलङ्कृत्य मन्त्रयेन्मूलतो दश ॥ १०

गायत्र्या दशवारं वै धेनुमुद्रां प्रदर्शयेत् ।
कलशस्य मुखे विष्णुः कण्ठे रुद्रः समाश्रितः ॥ ११

मूले तत्र स्थितो ब्रह्मा मध्ये मातृगणाः स्मृताः ।
कुक्षौ तु सागराः सर्वे सप्तद्वीपा वसुन्धरा ॥ १२

ऋग्वेदोऽथ यजुर्वेदः सामवेदोऽप्यथर्वणः ।
अङ्गैश्च सहिताः सर्वे नित्यं कलशमाश्रिताः ॥ १३

लोके यावन्ति तीर्थानि शान्तिपुष्टिकराणि च ।
सर्वे समुद्राः सरितस्तीर्थानि जलदा नदाः ॥ १४

आयान्तु देवीपूजायै दुरितक्षयकारकाः ।
पुष्कराद्यानि तीर्थानि गङ्गाद्याः सरितस्तथा ॥ १५

आगच्छन्तु पवित्राणि पूजाकाले सदा मम ।
हे गङ्गे यमुने देवि गोदावरि सरस्वति ॥ १६

नर्मदे सिन्धु कावेरि जलेऽस्मिन् सन्निधिं कुरु ।
आपो वा इति मन्त्रेण इमं मे गङ्गे इत्यतः ॥ १७

इमं मे वरुणेत्युक्त्वा तत्वायामीति मन्त्रतः ।
श्रीसूक्तेन त्रिवारं च तथा मूलेन वै दश ॥ १८

एवं कलशमामन्त्र्य शङ्खपूजां चरेद्बुधः ।
त्रिकोणवृत्तभूबिम्बमैंकारेण च गर्भितम् ॥ १९

स्ववामतस्तु तोयेन मण्डलं कारयेद्बुधः ।
हुं महाप्रकाशशक्त्यै( ) नमो गन्धाक्षतैर्यजेत् ॥ २०

आधारादिक्रमेणैव कलात्रितयमर्चयेत् ।
शङ्खं तन्मण्डले स्थाप्य पूरयेत्कुम्भवारिणा ॥ २१

गन्धपुष्पैः समभ्यर्च्य गायत्रीमूलमन्त्रतः ।
त्रिवारमभिमन्त्र्येत्थं धेनुं शङ्खं प्रदर्शयेत् ॥ २२

शङ्खं स्पृष्ट्वा जपेद्धीमान् वक्ष्यमाणैर्महामते ।
शङ्खादौ चन्द्रदैवत्यं कुक्षौ वरुणदेवता ॥ २३

पृष्ठे प्रजापतिश्चैव अग्रे गङ्गासरस्वती ।
त्रैलोक्ये यानि तीर्थानि वासुदेवस्य चाज्ञया ॥ २४

शङ्खे तिष्ठन्ति हे ब्रह्मन् तस्माच्छङ्खं प्रपजयेत् ।
त्वं पुरा सागरोत्पन्नो विष्णुना विधृतः करे ॥ २५

पूजितः सर्वदेवैश्च पाञ्चजन्य नमोऽस्तु ते ।
गर्भो देवारिनारीणां विशीर्यन्ते सहस्रशः ॥ २६

तव नादेन पाताले पाञ्चजन्य नमोऽस्तु ते ।
"अग्नेमन्वे"ति मन्त्रेण "इदं विष्णुश्च" तत्परम् ॥ २७

"विष्णोर्नुकमि" ति प्रोक्त्वा (?) पश्चा "त्त्रीणिपदे"ति च ।
"तदस्य प्रियमुक्त्वा" च "विष्णोःकर्माणि पश्यत" ॥ २८

"तद्विष्णोः परमं" प्रोक्त्वा( ?) मन्त्रैरेतैस्तु मन्त्रयेत् ।
मन्त्रयेच्च कलावारं मूलमन्त्रेण मन्त्रवित् ॥ २९

शङ्खतोयेन संप्रोक्ष्य आत्मानं प्रतिमां तथा ।
पूजोपकरणं सर्वं प्रोक्षयेन्मन्त्रतत्ववित् ॥ ३०

मार्ताण्डं सावृतिं चैव गुरुं विघ्नेश्वरं ततः ।
दीपनाथं ततः पश्चात् पूजयेत्कुसुमादिभिः ॥ ३१

सर्वप्राकारमभ्यर्च्य पीठपूजां ततश्चरेत् ।
अभिषेकादिकं तेन षोडशाचारमेव च ॥ ३२

सर्वं कृत्वा महाभाग पश्चादर्घ्यविधिं चरेत् ।
त्रिकोणवृत्तभूबिम्बमण्डलं पुरतो लिखेत् ॥ ३३

तत्र गन्धाक्षतान् क्षिप्य देवताश्चैव पूजयेत् ।
यजेद्भूतलिपिं शक्तिगणांश्च शिवशक्तितः ॥ ३४

शक्तिं च कामराजस्य ग्रहरूपाश्च देवताः ।
नक्षत्रदेवताश्चैव योगिनीश्च यजेत्सुधीः ॥ ३५

मेषादींश्च त्रिकोणेषु पूजयेत्पुरुषोत्तम ।
आग्नेयासुरवायव्य-ईशकोणेषु बुद्धिमान् ॥ ३६

गणपं वटुकं दुर्गां क्षेत्रपालं स्वनामतः ।
कामदेवं वसन्तं च गणेशं भारतीं तथा ॥ ३७

प्रागादिदिक्षु संपूज्य दिक्ष्वषृसु समर्चयेत् ।
सरस्वतीं श्रियं मायां स्कन्दं दुर्गां तथैव च ॥ ३८

विभूतिं भद्रकालीं च स्वस्तिं स्वाहां शुभङ्करीम् ।
वामामवामां संपूज्य नमोऽन्तं मन्त्रवित्तमः ॥ ३९

श्रियं गौरीं लो[illegible] तथा वागीश्वरीमपि ।
पूर्वोक्तेनैव मार्गेण देवीं मध्ये विचिन्तयेत् ॥ ४०

इन्द्रमग्निं यमं चैव निर्ऋतिं वरुणं तथा ।
वायुं सोमं तथेशानं ब्रह्माणं शेषमेव च ॥ ४१

दीर्घबीजनमोऽन्तेन तद्वाह्ये पूजयेत्क्रमात् ।
मण्डलेऽथ समभ्यर्च्य तस्मिन् सामान्यपात्रकम् ॥ ४२

वारिणा पूर्णमापूर्य अर्चयेत्सकलाः कलाः ।
वह्नेर्भानोः सुधांशोश्च कलां संपूजयेत्ततः ॥ ४३

आत्मानं तज्जलैः प्रोक्ष्य पूजोपकरणान्यपि ।
गुरुर्ब्रह्मा गुरुर्विष्णुर्गुरुरेव महेश्वरः ॥ ४४

गुरुरेव परं ब्रह्म तस्मै श्रीगुरुवे नमः ।
इति गन्धाक्षतैर्ब्रह्मरन्ध्रे श्रीगुरुमर्चयेत् ॥ ४५

सामान्यार्घ्यमिति प्रोक्तं कुर्यान्न्यासषडङ्ग कम् ।
विशेषार्घ्यं चरेद् धीमान् वक्ष्यमाणप्रकारतः ॥ ४६

बिन्दुत्रिकोणषट्कोणवृत्तं भूगृहमेव च
तत्र गन्धाक्षतान् क्षिप्य(?) आधारं संप्रतिष्ठयेत् ॥ ४७

कुं महाप्रकाशशक्त्यै नमो गन्धाक्षतान् क्षिपेत् ।
वह्निसूर्यकला इष्ट्वा आधारे कलशे सुधीः ॥ ४८

मायां मायाकलाविघ्नौ रौद्रीं दुर्गां च कालिकाम् ।
पातालभैरवीं चैव नमोऽन्तं दुग्धकुम्भके ॥ ४९

दुग्धे घटे श्रियः पूजा दिव्यगन्धाक्षतैस्तथा ।
नक्षत्रमालाभूषां च तथा नक्षत्रमालिनीम् ॥ ५०

नवग्रहांश्च सोमं च पूजयेत्कलशे शुभे ।
स्वस्त्रीहस्तात् दुग्धकुम्भं "गौरी मिमाय" मन्त्रतः (?) ॥ ५१

वामहस्तेन गृह्णीयाद् दक्षिणेन पिधाय च ।
गृहीत्वा कलशं मन्त्री "स्वस्तिनोमि"ति मन्त्रतः ॥ ५२

जपेद "दितिर्जनित्व" मित्यन्तं कमलोद्भव ।
पूर्वोक्तमण्डले स्थाप्य क्षीरपूर्णघटं सुधीः ॥ ५३

कलाषट्कं समभ्यर्च्य सर्वमन्त्रांस्ततो जपेत् ।
धूपदीपं ततः पश्चात् नैवेद्यं कारयेद्बुधः ॥ ५४

षट्पात्रं स्थापयेत्तात त्रिपात्रमथवा भवेत् ।
वह्निषट्कोणवृत्तं च भूविम्बैङ्कारगर्भितम् ॥ ५५

हुं महाप्रकाशशक्त्यै नमो गन्धाक्षतान् क्षिपेत् ।
अग्नीशासुरवायव्य - मध्यैन्द्रादिषु दिक्षु च ॥ ५६

अङ्गैःसंपूज्य श्रीपात्रस्वाधारं संप्रकल्पयेत् ।
क्षीरेणापूर्य तत्पात्रं वह्निसूर्यकलार्चनम् ॥ ५७

सुधाकरकलाश्चैवमर्चयेदर्घ्यदुग्धके ।
श्रीपात्रं मन्त्रयेत्स्पृष्ट्वा "प्रसुन्मन्तेति" नामभिः ॥ ५८

"शंस्योनाभवन्त्वन्तं" जपेन्मन्त्रैस्तु मन्त्रवित् ।
वह्निसूर्येन्दु सद्ब्रह्म विष्णुरुद्रेशचित्कलाः ॥ ५९

चतुर्नवतिमन्त्रैस्तु प्रथमं परमामृतम् ।
धूम्रार्चिरूष्मा ज्वलिनी ज्वालिनी विस्फुलिङ्गिनी ॥ ६०

सुश्रीः स्वरूपा कपिलाहव्यकव्यवहास्तथा ।
वह्नेर्दशकला ज्ञेया दशधर्मफलप्रदाः ॥ ६१

यादिक्षान्तैः कलामन्त्रैः पूजयेत्पुरुषोत्तम ।
तपिनी तापिनी धूम्रा मरीचिर्ज्वालिनी रुचिः ॥ ६२

सुषुम्ना भोगदा विश्वा बोधिनी धारिणी क्षमा ।
एताः कलास्तु सूर्यस्य सूर्यमण्डलसंस्थिताः ॥ ६३

कादिठान्तं भादिडान्तमनुलोमविलोमतः ।
कलाः संपूजयेद्विद्वान् सूर्यमण्डलसंस्थिताः ॥ ६४

अमृता मानदा पूषा तृष्टिः पुष्टी रति धृतिः ।
शशिनी चन्द्रिका कान्तिः ज्योत्स्ना श्रीः प्रीतिरङ्गदा ॥ ६५

पूर्णा पूर्णामृता कामदायिनी षोडशी कलाः ।
स्वरेण पूजयेद्विद्वान् सोममण्डलसंस्थिताः ॥ ६६

सृष्टिर्वृद्धिर्धृतिर्मेधा कान्तिर्लक्ष्मीर्द्युतिः स्थिरा ।
स्थितिः सिद्धिरिति प्रोक्ताः कचवर्गकलाःस्मृताः ॥ ६७

"हंसः शुचिषन्म"न्त्रेण पात्रं स्पृष्ट्वा जपेद्बुधः ।
जरा च पालिनी क्षान्तिरैश्वर्यरतिकामिकाः ॥ ६८

वरदाह्लादिनीप्रीतिदीर्घाः स्युष्टतवर्गकाः ।
दशविष्णुकला मन्त्री "प्रतद्विष्णु" जपेत्ततः ॥ ६९

तीक्ष्णा रौद्री भया क्रुद्धा तन्द्रीक्षुत्क्रोधिनीह्रियः ।
उद्गारी मृत्युरेताः स्युर्दीर्घाःस्युः पयवर्गकाः ॥ ७०

"त्र्यम्बकं" च महामन्त्रं जपेद्विद्वानतन्द्रितः ।
विन्दोरपि च तस्यास्तु पीता श्वेतारुणासिताः ॥ ७१

षादिक्षान्ताःकला विष्णोर्योनिमन्त्रं जपेद् बुधः ।
निवृत्तिश्च प्रतिष्ठा च विद्या शान्तिस्तथैव च ॥ ७२

इन्धिका दीपिका चैव रेचिका मोचिका तथा ।
सूक्ष्मा सूक्ष्मामृता ज्ञानामृता चाप्यायियिनी तथा ॥ ७३

व्यापिनी व्योमरूपा च नाम ताः स्वरजाः कलाः ।
नारायणेन संजातगर्भं देहीति मन्त्रतः ॥ ७४

एताः कला मातृकाश्च अखण्डैकादिकान्मनून् ।
अमृतेशीं दीपिनीं च मूलविद्यामपि क्रमात् ॥ ७५

एकद्वित्रिचतुष्पञ्च द्विचतुर्नवमं बुधः ।
संयक् स्पृष्ट्वाऽर्घ्यपात्रं तु प्रजपेद्धेनुमुद्रया ॥ ७६

पुनरन्यान् महामन्त्रान् संपुटान् मोचनार्थकान् ।
जपित्वा मूलवर्णांश्च श्रीसूक्तमपि मन्त्रवित् ॥ ७७

एवं श्रीपात्रपूजां च कृत्वा देशिकपूजनम् ।
विन्दुत्रिकोणषट्कोणवृत्तभूगृहमेव च ॥ ७८

हुं महाप्रकाशशक्त्यै (च) नमो गन्धं विनिक्षिपेत् ।
गुरुपात्रस्य चाधारं स्थाप्य पात्रं गुरोरपि ॥ ७९

वह्निसूर्यकलाविष्टा[1] आधारे चैव पात्रके ।
गं फं पदं समुद्धृत्य विमलाय नमस्तथा ॥ ८०

कं सं पूर्णाय संप्रोक्त्वा (?) नमस्तत्परमेव तु ।
कं लं पूर्णामृतायेति नमः प्रोक्त्वा (?) तृतीयकम् ॥ ८१

मायां पद्मां समुद्धृत्य गुरवे नम इत्यतः ।
क्षीरमापूर्य पात्रे तु पूर्वोक्तैर्विमलादिभिः ॥ ८२

मन्त्र्य त्रितारमुद्धृत्य महालक्ष्मीपरापदम् ।
आनन्दगुरवे पश्चात् परापरगुरुर्वदेत् ॥ ८३

श्रीपादुकां पूजयामि स्वगुरुं मूर्ध्नि पूजयेत् ।
सुधाकलां समभ्यर्च्य श्रीनाथादिमनुं जपेत् ॥ ८४

गुरुं तद्बिन्दुनाऽभ्यर्च्य श्रीनाथादिक्रमाद्यजेत् ।
अखण्डमण्डलाकारं व्याप्तं येन चराचरम् ॥ ८५

तत्प(रं)दं दर्शितं येन तस्मै श्रीगुरवे नमः ।
सच्चिदानन्दरूपाय बिन्दुनादान्तरात्मने ॥ ८६

आदिमध्यान्तशून्याय गुरूणां गुरवे नमः ।
देव नाथ गुरो स्वामिन् देशिक स्वात्मनायक ॥ ८७

त्राहि त्राहि दयासिन्धो पूजां पूर्णतरां कुरु ।
गुरुपात्रं गुरोः सन्निधाने संस्थापयेद् बुधः ॥ ८८

---

1. कला इष्ट्वा

मूलाधारे हृदब्जे च भ्रूमध्ये मूर्ध्नि बिन्दुना ।
तत्वशोधनमार्गेण प्रोक्षयेन्मन्त्रवित्तमः ॥ ८९

आत्मानं स्वगुरुं ध्यात्वा यः कुर्यात् तत्त्वमार्गतः ।
बिन्दुं हुनेत्कुण्डलिन्यां "आर्द्रं ज्योति"रिति श्रुतेः ॥ ९०

स्थूलं सूक्ष्मं कारणंच तत्त्रयं शोधयेत्ततः ।
एवमर्घ्यविधेः पूर्वं द्वीपनाथादिकं यजेत् ॥ ९१

त्रितारं च समुद्धृत्य रत्नद्वादशतत्परम् ।
शक्त्या तु सहितायेति द्वीपनाथाय चानतिः ॥ ९२

एवं द्वीपेश्वरं पूज्य पुरतश्चक्रमन्दिरे ।
आदौ त्रितारमुच्चार्य चतुर्थ्यन्तं नमः पदम् ॥ ९३

क्षीराब्धिं पूजयेत्पश्चात् श्वेतद्वीपं महामते ।
नानावृक्षमहोद्यानं पश्चात्कल्पद्रुवाटिकाम् ॥ ९४

पश्चात्सन्तानवाटीं च हरिचन्दनवाटिकाम् ।
मन्दारवाटिकां पारिजातानां वाटिकामपि ॥ ९५

कदम्बवाटिकां पश्चात् विल्ववाटीमतः परम् ।
पुष्यरागमयं चैव प्राकारं पद्मरागजम् ॥ ९६

गोमेदकस्य प्राकारं वज्ररत्नमयं ततः ।
वैडूर्यरत्नप्राकारमिन्द्रनीलमयं तथा ॥ ९७

मुक्तामयं च प्राकारं तथा मरतकं ततः ।
प्राकारं वैद्रुमं चैव तथा माणिक्यमण्डपम् ॥ ९८

सहस्रस्तम्भसंयुक्तमण्डपं पूजयेत्ततः ।
पश्चादमृतवापीं च ततश्चानन्दवापिकाम् ॥ ९९

ततो विमर्शवापीं च विशालमणिकुट्टिमम् ।
बालातपसमुद्गारं चन्द्रिकोद्गारमेव च ॥ १००

महाश्टङ्गारपरिघां महापद्ममयाटवीम् ।
चिन्तामणिगृहं तात पूजयेन्मन्त्रवित्तमः ॥ १०१

पूर्वाम्नायमयं पूर्वद्वारं ब्रह्मन् समर्चयेत् ।
दक्षिणे पश्चिमे सौम्ये शिष्टवेदत्रयं यजेत् ॥ १०२

रत्नप्रदीपवलयं महासिह्मासनं ततः ।
क्षीरार्णवासनं पूज्य तथा पीताम्बुजासनम् ॥ १०३

देव्यासनं तथा चक्रासनं मन्त्रासनं तथा ।
साध्यसिद्धासनं चैव पूजयेन्मन्त्रविद्बुधः ॥ १०४

सिह्मासनस्य पादानि पूजयेन्मन्त्रतत्ववित् ।
हंसतूलमयं तल्पं हंसतूलोपधानकम् ॥ १०५

कौसुम्भास्तरणं चैव तथा देवीवितानकम् ।
मायायवनिकां चैव चतुर्थ्यन्तं समर्चयेत् ॥ १०६

प्रतिमायां तथा चक्रे कलशे कमलासन ।
सालग्रामे दर्पणे वा कन्यामूर्तौ प्रपूजयेत् ॥ १०७

मायां पद्मां रमां चैव महाश्रीमूर्तिमेव च ।
क्लपयामीति मन्त्रेण श्रियस्त्वाह्वानमाचरेत् ॥ १०८

पुष्पाञ्जलिं गृहीत्वा [illegible] त्रिखण्डामुद्रया बुधः ।
आवाहयेन्महालक्ष्मीमानन्दैकस्वरूपिणीम् ॥ १०९

आदौ मूलं समुच्चार्य पश्चादावाहयेच्छ्रियम् ।
महापद्मवनान्तस्थे कारणानन्दविग्रहे ॥ ११०

सर्वभूतहिते मातरेह्येहि परसुन्दरि ।
लक्ष्मीमेवं समावाह्य पश्चान्मुद्राः प्रदर्शयेत् ॥ १११

संस्थापनं सन्निधानं सन्निरोधनमेव च ।
ततोऽवकुण्ठनं तात[1] वदनं धेनुयोनयः ॥ ११२

त्रितारेणैव कर्तव्याः सर्वसिद्धिप्रदायकाः ।
उपचारान् चतुष्षष्टिं कुर्याद्विद्वानतन्द्रितः ॥ ११३

षोडशै(?) रुपचारैर्वा महालक्ष्मीं प्रपूजयेत् ।
श्रीसूक्तेन श्रियः षोडशोपचारान् प्रकल्पयेत् ॥ ११४

आवाहमासनं पाद्यं अर्घ्यमाचमनीयकम् ।
स्नानं वस्त्रं तथा भूषां गन्धं पुष्पं च धूपकम् ॥ ११५

दीपं चैव तु नैवेद्यं ताम्बूलं मन्त्रपुष्पकम् ।
नमस्कारेण संयुक्तं उपचारं प्रकल्पयेत् ॥ ११६

पौरुषेण तु सूक्तेन मे पूजां कारयेद्बुधः ।
पञ्चाक्षरेण तार्क्ष्यस्य पूजां कुर्याद्विचक्षणः ॥ ११७

---

1. सम्मुखमुद्रां च

श्रियं मां च महातार्क्ष्यं संपूज्य तदनन्तरम् ।
श्रीपात्रक्षीरविन्दूनां कणैर्लक्ष्मीं समर्चयेत् ॥ ११८

त्रिधा वा दशधा वापि तथा षोडशधा पुनः ।
पञ्चविंशतिधा तात शतधा तर्पयेच्छ्रियम् ॥ ११९

मां हरिं वैनतेयं च तथा सन्तर्पयेद्बुधः ।
अग्नीशासुरवायव्यमध्येदिक्षु षडङ्गकम् ॥ १२०

षडङ्गन्यासमार्गेण पूजयेत्पुरुषोत्तमः ।
नित्याषोडशिकानां च पूजनं कमलासन ॥ १२१

श्रीकला प्रथमायां तु द्वितीयायां परा स्मृता ।
तृतीया कामदा ज्ञेया चतुर्थ्यामैन्द्रिसंज्ञिका ॥ १२२

पञ्चम्यां भुवनाधीशा षष्ठ्यामानन्दरूपिणी ।
सप्तम्यां भूतिदा ज्ञेया अष्टम्यां तत्कला स्मृता ॥ १२३

नवम्यां कमला ज्ञेया दशम्यां परमेश्वरी ।
सरस्वत्येकादश्यां च महामाया तु द्वादशी ॥ १२४

वागीश्वरी त्रयोदश्यां चतुर्दश्यां च मोहिनी ।
परा पञ्चदशी प्रोक्ता षोडशी श्रीःप्रकीर्तिता ॥ १२५

एवं संपूजयेत् विद्वान् मित्रेशादीन् ततःपरम् ।
गुरुपात्रामृताद् विन्दुकणैः संपूज्य बुद्धिमान् ॥ १२६

एवं संपूजयेत् विद्वान् ततश्चावरणं यजेत् ।
संविन्मये परे देवि परामृतरसप्रिये( ) ॥ १२७

अनुज्ञां कुरु देवेशि परिवारार्चनाय मे ।
त्रिपुराद्यास्ततः पश्चात् सर्वरोगहरेऽर्चयेत् ॥ १२८

सर्वरक्षाकरे चक्रे रतिकामादिदेवताः ।
वहिर्दशारे तार्क्ष्यादिदेवताः पूजयेत्सुधीः ॥ १२९

सर्वसौभाग्यदे चक्रे रेणुकादीः प्रपूजयेत् ।
सर्वसंक्षोभणे चक्रे अणिमादिप्रपूजनम् ॥ १३०

सर्वाशापूरके चक्रे कामेश्वर्यादयः स्मृताः ।
श्रीशार्ङ्ग्यादयश्चैव दिक्पालाः संप्रकीर्तिताः ॥ १३१

द्वारदेशेषु संपूज्या दमकाद्या महाबलाः ।
श्र्याद्याः षोडशदेव्यस्तु षोडशार्णस्य वर्णतः ॥ १३२

त्रिमूर्तयस्त्रिखण्डेन तत्तन्मूलेन पूजयेत् ।
त्रिपुराद्या महादेव्यः पूजनीयाः प्रयत्नतः ॥ १३३

रतिकामादयः सर्वे पूजनीयाः स्वमन्त्रतः ।
ऋद्धितार्क्ष्यादयश्चापि रेणुकाद्यास्तथा भवेत् ॥ १३४

कामेश्वर्यादयः सर्वास्तथा पूज्याः स्वमन्त्रतः ।
श्रियाद्याः पूर्ववत्प्रोक्ताः पूजयेत्पूर्वमार्गतः ॥ १३५

सर्वानन्दं समारभ्य मुद्रा व्युत्क्रमतो भवेत् ।
सृष्टिमार्गेण संपूज्य पश्चात्संहारमार्गतः ॥ १३६

चतुष्कोणस्थिताः पूज्य क्षोभिणीं च प्रदर्श्य च ।
कामाकर्षणिकाद्यास्तु अकाराद्यक्षरैर्यजेत् ॥ १३७

अनङ्गकुसुमाद्याश्च अष्टवर्गेण पूजयेत् ।
मन्वश्रे क्षोभिणीमुख्याः कादिडान्तेन पूजयेत् ॥ १३८

सर्वसिद्धिप्रदाद्यास्तु णादिभान्तेन पूजयेत् ।
मादिक्षान्तेन संपूज्य सर्वज्ञाद्या महामते ॥ १३९

वशिनीप्रमुखा देव्यः पूजनीया अष्टवर्गतः ।
त्रिखण्डेनैव संपूज्याः कामेश्वर्यादयः सदा ॥ १४०

तार्क्ष्यं विष्णुं श्रियं चापि पूजयेत्स्वस्वमन्त्रतः ।
सर्वानन्दमयं चक्रं सर्वसिद्धिप्रदायकम् ॥ १४१

सर्वरोगहरं चक्रं [सर्वरक्षाकरं तथा ।
सर्वार्थसाधकं चक्रं सर्वसौभाग्यदायकम् ।
सर्वसङ्क्षोभणं चक्रं सर्वाशापरिपूरकम् । १४२

त्रैलोक्यमोहनं चक्रं] नवचक्रं प्रकीर्तितम् ॥
परापररहस्या च तथैवातिरहस्यका ॥ १४२अ

रहस्या च निगर्भा च कुलोत्तीर्णा ततःपरम् ।
संप्रदाया गुप्ततरा गुप्ता प्रकटसंज्ञिका ॥ १४३

महापरमचिच्छ्रीश्च परान्बा परसिद्धिका ।
परामालिनिका देवी पराश्रीपरवासिनी ॥ १४४

परसुन्दरिका देवी परेशी च परा स्मृता ।
महायोनिबीजमुद्रा खेचर्यङ्कुशरूपिणी ॥ १४५

उन्मादिनी वश्यकरी तथैवाकर्षणी स्मृता ।
द्राविणी क्षोभिणी प्रोक्ता दर्शयेच्च तथाक्रमम् ॥ १४६

सर्वसंमोहनं चक्रं आरभ्य कमलासन ।
सर्वचक्रान्तरालेषु पूजयेत्प्रोक्तदेवताः ॥ १४७

भैरवा मातृकाश्चैव मुद्रादशकदेवताः ।
सर्वसंक्षोभणे चक्रे पूजनीयाः प्रयत्नतः । १४८

विन्दुचक्रान्तमभ्यर्च्य सर्वसंमोहनादितः ।
प्रकटाद्याः परान्ताश्च नवयोगिनिदेवताः ॥ १४९

सर्वसंक्षोभिणीमुद्राप्रमुखा दर्शयेत्क्रमात् ।
डाकिनी शाकिनीचैव लाकिनी काकिनी तथा ॥ १५०

साकिनी हाकिनी पातु चक्रस्था योगिनीगणाः ।
चतुरस्रे महाचक्रे बुधमभ्यर्चयेत् बुधः ॥ १५१

प्रजापतिः षोडशारे शिवं नागच्छदे तथा ।
नवश्रे भास्करं विद्यात् द्विदशारे हरिं तथा ॥ १५२

परमेशीमष्टकोणे त्रिकोणे पार्वतीमपि ।
विन्दौ लक्ष्मीं समभ्यर्च्य महापरमचिच्छ्रियम् ॥ १५३

एवं सन्तर्प्य पश्चात्तु धूपदीपादि दर्शयेत् ।
परमान्नादिनैवेद्यं क्षीरादीनि निवेदयेत् ॥ १५४

ताम्बूलाद्युपचारांश्च कुलदीपं निवेद्य च ॥

अथ बलिदानम् ॥-

ईशानभागे चक्रस्य त्रिकोणं वृत्तमेव तु ॥ १५५

चतुरस्रं विधायात्र गन्धपुष्पाक्षतान् क्षिपेत् ।
अर्धान्नं पूर्णसलिलं पात्रं तस्मिन्निधाय च ॥ १५६

क्षां क्षीं क्षूं क्षैं ततःपश्चात् क्षौं क्षं क्षः इतिसंवदेत् ।
क्षेत्रपाल बलिं गृह्ण गृह्ण सर्वं वदेत्ततः ॥ १५७

विघ्ननाशाय तत्पश्चात् सर्वविघ्नकृदित्यतः ।
भ्यः सर्वभूतेभ्यो हुं फट् स्वाहान्तं मन्त्रमुद्धरेत् ॥ १५८

क्षेत्रपालबलिं दत्वा जयादीनां वलिं हरेत् ।
श्रीलक्ष्मीर्वरदा विष्णु(:) पत्नी चैव वसुप्रदा ॥ १५९

हिरण्यवर्णा स्वर्णस्रङ्मालिनी रजतस्रजा ।
सुवर्णगर्भा स्वर्ण + प्राकार पद्मनिवासिनी ॥ १६०

पद्मप्रिया पद्महस्ता मुक्तालङ्कारदेवता ।
चन्द्रा बिल्वप्रिया भूतिः प्रभूतिश्च विभूतिका ॥ १६१

ऋद्धिः समृद्धिः पुष्टिश्च तुष्टिश्च धनदा तथा ।
धनेश्वरी च श्रद्धा च भगिनी भोगदायिनी ॥ १६२

धात्री विधात्री सर्वेशी सर्वसौभाग्यदायिनी ।
महालक्ष्मीप्रसादं वै गृह्णन्तु वलिदेवताः ॥ १६३

---

+ स्वर्णप्राकारा

 

श्रीशक्तिबलिमेवं वै कृत्वा देव्यन्तरार्चनम् ।
चक्रस्य वामभागे तु शक्तिं बिन्दुं च भूगृहम् ॥ १६४

विधाय गन्धान्निक्षिप्य मण्डलेऽर्चनमाचरेत् ।
वामां ज्येष्ठां च रौद्रीं च पूजयेदम्बिकामपि ॥ १६५

मध्ये बिन्दुकलां नादकलां सम्पूजयेद्बुधः ।
लक्ष्मीभक्तां महाभागां पतिशुश्रूषणे रताम् ॥ १६६

रागद्वेषादिहीनां च सर्वाभरणभूषिताम् ।
स्वजायां तां समाहूय महालक्ष्मीमयां स्मरेत् ॥ १६७

पादप्रक्षालनं कृत्वा पूजां कुर्याद्विचक्षणः ।
प्रथमं खण्डमुच्चार्य पुष्पैः पादे समर्चयेत् ॥ १६८

रिक्ताम्बापाद इत्येवं लक्ष्मीबुध्या समर्चयेत् ।
द्वितीयखण्डमुच्चार्य शुक्लनाथपदं वदेत् ॥ १६९

पादेति च पदं प्रोक्त्वा(?)स्वयं विष्णुमयोऽर्चयेत् ।
तृतीयं खण्डमुच्चार्य पञ्चान्मिश्रेतिसंवदेत् ॥ १७०

चरणं पाद इत्युक्त्वा पुष्पैः संयक् समर्चयेत् ।
षोडशार्णं समुद्धृत्य निर्वाणचरणेति च ॥ १७१

पादइत्यर्चयेद् धीमान् महालक्ष्मीमनुस्मरन् ।
स्वयं विष्णुमयो भूत्वा लक्ष्मीं जायां विचिन्त्य तु ॥ १७२

षोडशैः(?) रुपचारैश्च पूजयेत्तामनिन्दिताम् ।
पात्रे क्षीरं समापूर्य मन्त्रमेवं समुच्चरन् ॥ १७३

दद्याज्जायाकरे धीमान् सर्वभाग्यप्रसिद्धये ।
क्षीरपात्रमिदं तुभ्यं दीयते सहितं फलम् ॥ १७४

स्वीकृत्य सुभगे लक्ष्मि जयं जेहि रिपुंदह ।
अनेन दद्यान्मन्त्रेण जायाहस्ते सुरोत्तम ॥ १७५

पात्रदानेन ते तुष्टा देवी स्वीकृत्य पात्रकम् ॥ १७६

चर्वयामि विपक्षं ते सदा निर्विघ्नमस्तु ते ।
पीत्वा पूर्णतया क्षीरं दद्याद्भक्तकरे तदा ॥ १७७

क्षीरपात्रं मया दत्तं शेष(दुख ?)दुग्धसमन्वितम् ।
तव शत्रून्हनिष्यामि सर्वाभीष्टं ददामि ते ॥ १७८

ऐश्वर्यमतुलं चास्तु नृत्यन्तु निधयस्तव ।
शत्रवो नाशमायान्तु सन्तु ते सिद्धयः सदा ॥ १७९

सन्तु पुत्राश्च पौत्राश्च सुहृदः प्राणसम्मताः ।
भ्रातरः प्राणदयिताः सर्वदा सन्तु ते चिरात् ॥ १८०

अपमृत्युश्च ते मास्तु व्याधिजालं तथा भयम् ।
पापजालानि नश्यन्तां कामक्रोधादयस्तथा । १८१

देहान्ते तेऽपवर्गं च दास्यामि विजयी भव ।
एवं तया तु संप्रोक्तो गृह्णीयात्पात्रमुत्तमम् ॥ १८२

धन्योऽस्म्यनुगृहीतोऽस्मि समृद्धोऽस्मि धनैरापि ।
(त्वत्प्रसादान्महालक्ष्मी देवी ते नमते नमः ।)
त्वत्प्रसादान्महालक्ष्मि नमस्ते देवि ते नमः ॥ १८३

तदनुज्ञां तु संप्राप्य स्वीकुर्यात्तत्वमार्गतः ।
श्रीपात्रक्षीरमापीय तत्वमार्गेण तत्ववित् ॥ १८४

दद्यात्क्षीरं घटान्तःस्थं सतां समयिनामपि ।
पूजामेवं चरित्वा तु नव मुद्राः प्रदर्श्य च ॥ १८५

"हिरण्यपात्र मित्या"दि त्वा"द्युस्तेजो दधाति" च ।
अनेन वेदमन्त्रेण श्रीपात्रं मूर्ध्नि धारयेत् ॥ १८६

अथपूजार्पणं कुर्यात् पुष्पोदकसमन्वितम् ।
गुह्यातिगुह्ये मे कर्म गृहाण यजनादिकम् ॥ १८७

सिद्धिर्भवतु मे देवि त्वत्प्रसादाद्हस्थिते ।
यन्मया क्रियते कर्म जाग्रत्स्वप्नसुषुप्तिषु ॥ १८८

तत्सर्वं तावकी पूजा भूयाद् भूत्यै सदा मम ।
[illegible]सा कर्मणा वाचा हस्ताभ्यां पद्द्वयेन च ॥ १८९

यत्कृतं श्रीमहालक्ष्म्याः पदमर्पणमेव च( ?)
भवतु स्वाहया युक्तं एवं मन्त्रं समुद्धरेत् ॥ १९०

हरिर्दाता हरिर्भोक्ता हरिः सर्वमिदं जगत् ।
हरिः सृजति भूतानि सोऽहं सोऽहं न संशयः ॥ १९१

[1]ओं ह्रीं मा च मादीयाचा स्मात्स्वा मिपदं ततः ।
[illegible]ध्यो श्रियै पदमित्युक्त्वा समर्पणमिति स्मृतम् ॥ १९२

---

१. ओं ह्रीं मा मां मदीयांश्च स्वामिन्यै च पदं ततः ।
देव्यै श्रियै पदं चोक्त्वा समर्पणमिति स्मृतम् ॥
ओं ह्रीं मा— श्रीं मां मदीयांश्च स्वामिन्यै देव्यै श्रियै समर्पयामि ॥

स्वस्वमन्त्रेण दैं तात उद्वास्य बलिदेवताः ।
नन्दन्तु साधकास्सर्वे नश्यन्तु मम दूषकाः ॥ १९३

पद्मिन्यास्था च मे चास्तु प्रसन्नोऽस्तु गुरुःसदा ।
एवं प्रोक्त्वा(?) शङ्खजलैः सर्वान् संप्रोक्षयेत्सुधीः ॥ १९४

"अदितिर्द्यौरिवमादि जनित्वमिति"मन्त्रतः ।
विंचार्य मूलमन्त्रेण यन्त्रस्थां चितिं योजयेत् ॥ १९५

एवं सम्यक् समाख्यातं पूजाक्रममनुत्तमम् ।
एवं यः कुरुते विद्वान् पक्षे मासेऽथ वत्सरे ॥ १९६

सर्वसिद्धिं समाश्रित्य धनदेन समो भवेत् ।
नित्यपूजा तु कर्तव्या श्रीसूक्तेन महामते ॥ १९७

कुम्भपूजां समारभ्य पीठपूजां च कारयेत् ।
श्रीसूक्तेनैव कर्तव्या श्रीपूजा पुरुषोत्तम ॥ १९८

कृत्वा श्रीबलिपात्रं वै पूजा पूर्णतरा भवेत् ॥ १९९

इति श्रीमहालक्ष्मीकल्पे नारायणब्रह्मोमामहेश्वर-
संवादे प्रत्यक्षसिद्धिप्रदे महालक्ष्मी -
रत्न (कल्प) कोशाख्ये
चतुर्दशोऽध्यायः ॥

## ॥ पञ्चदशोऽध्यायः ॥

ब्रह्मोवाच -

नमस्ते पुण्डरीकाक्ष नमस्ते भक्तवत्सल ।
पूजाप्रकरणे मुद्रा सूचनीया इति स्मृता ॥ १

कथं विरचनं तासां क्रियते वद तत्वतः ।

नारायण उवाच

श्रृणु ब्रह्मन् प्रवक्ष्यामि मुद्राः सर्वार्थसिद्धिदाः ॥ २

याभिर्विरचिताभिस्तु सुमु[illegible] श्रीः सदा भवेत् ।
परिवृत्य करौ स्पृष्ट्वा अङ्गु[illegible] कारयेत्समौ ॥ ३

अनामिकान्तर्गतौ कृत्वा तर्जन्यौ कुटिलाकृती ।
कनिष्ठिके नियुञ्जीत निजस्थाने सुरेश्वर ॥ ४

त्रिखण्डेयं महामुद्रा श्रियस्त्वाह्वानकर्मणि ।
मध्यमामध्यगे कृत्वा कनिष्ठाङ्गुष्टरोपिते ॥ ५

तर्जन्यौ दण्डवत्कृत्वा मध्यमोपर्यनामिके ।
एषा तु क्षोभिणी मुद्रा नवमी क्षोभकारिणी ॥ ६

[illegible]स्यामेव मुद्रायां मध्यमे सरले यदि ।
क्रियते(?) चाष्टमी मुद्रां सर्वविद्राविणी — भवेत् ॥ ७

[illegible]मातर्जनीभ्यां तु कनिष्ठानामिके समे ।
अङ्कुशाकाररूपाभ्यां मध्यमे कारयेद्बुधः ॥ ८

इयमाकर्षणी मुद्रा त्रैलोक्याकर्षकारिणी ।
पुटाकारौ करौ कृत्वा तर्जन्यावङ्कुशाकृती ॥ ९

परिवृत्य क्रमेणैव मध्यमे तदधोगते ।
क्रमेण तात तेनैव कनिष्ठानामिके अपि ॥ १०

संयोज्य निजवन्धस्थावङ्गुष्टावग्रदेशतः ।
मुद्रेयं परमा व्रह्मन् सर्ववश्यकरी समृता ॥ ११

संमुखौ तु करौ कृत्वा मध्यमामध्यगं त्यजेत् ।
अनामिके तु सरले तद्बहिस्तर्जनीद्वयम् ॥ १२

दण्डाकारौ ततोऽङ्गुष्ठौ मध्यमा नखदेशगौ ।
मुद्रैषोन्मादिनी नाम्ना क्लेदिनी सर्वयोषिताम् ॥ १३

अस्यान्त्वनामिकायुग्मं अधःकृत्वाङ्कुशाकृति ।
तर्जन्यामपि तेनैव क्रमेण विनियोजयेत् ॥ १४

इयं महाङ्कुशा मुद्रा सर्वकार्यार्थसाधिनी ।
सव्यं दक्षिणदेशे तु दक्षिणं सव्यदेशतः ॥ १५

बाहुं कृत्वा चतुर्वक्त्र हस्तौ संपरिवर्त्य च ।
कनिष्ठानामिके देव युक्ते तेन क्रमेण तु ॥ १६

तर्जनीभ्यां समाक्रान्ते सर्वोर्ध्वमपि मध्यमे ।
अङ्गुष्ठौ सरलौ कुर्यात् मुद्रेयं खेचरी स्मृता ॥ १७

एतया ज्ञातया तात योगिनीनां प्रियो भवेत् ।
परिवृत्य करौ स्पृष्ट्वा अर्धचन्द्राकृती तथा ॥ १८

तर्जन्यङ्गुष्ठयुगलं युगपत्कारयेद् बुधः ।
+ अधः कनिष्ठावष्टब्धे मध्यमे विनियोजयेत् ॥ १९

तथैव कुटिले योज्य सर्वाधस्तादनामिके ।
बीजमुद्रेयमचिरात् सर्वसिद्धिप्रवर्तिनी ॥ २०

मध्यमे कुटिले कृत्वा तर्जन्युपरि संस्थिते ।
अनामिकामध्यगते तथैव हि कनिष्ठिके ॥ २१

सर्वा एकत्र संयोज्य अङ्गुष्ठपरिपीडिताः ।
एषा तु प्रथमा मुद्रा योनिमुद्रा समीरिता ॥ २२
पूजाकाले प्रयोक्तव्या यथानुक्रमयोगतः ।

इति श्रीमहालक्ष्मीकल्पे नारायणब्रह्मोमामहेश्वर-
संवादे प्रत्यक्षसिद्धिप्रदे महालक्ष्मी -
रत्न (कल्प) कोशाख्ये
पञ्चदशोऽध्यायः ॥

---

+ अधः कनिष्ठिकाङ्गुष्ठौ तदधो विनि योजयेत् ।

## षोडशोऽध्यायः ।

अथास्य मन्त्रराजस्य पुरश्चरणमुच्यते ।
विना येन न सिद्धः स्यान्मन्त्रो वर्षशतैरपि ॥ १

गुरुप्रसादाल्लब्ध्वाथ मन्त्रं सर्वार्थसाधकम् ।
ततः संकल्प्य कुर्वीत पुरश्चरणमादरात् ॥ २

शैलाग्रे बिलमध्ये वा तीरे वा लवणाम्बुधेः ।
नदीतटेऽश्वत्थमूले बिल्वमूले विशेषतः ॥ ३

गवां गोष्ठेषु तीर्थेषु विष्णुक्षेत्रेषु शस्यते ।
भुञ्जानो वा हविष्यान्नं श्यामाकं यावकं तु वा ॥ ४

पयो मूलं फलं वापि यद्यदत्रोपतिष्ठते ।
लवणं च पलाण्डुं च क्षारं रौद्रं रसान्तरम् ॥ ५

माषमुद्गं मसूराद्यान्कोद्रवांश्चणकानपि ।
असद्भाषणमन्योन्यं वर्जयेदन्यपूजनम् ॥ ६

वर्णाश्रमोचितं नित्यमथ नैमित्तिकं चरेत् ।
स्त्रीशूद्रपतितव्रात्यनास्तिकोच्छिष्टभाषणम् ॥ ७

असत्यभाषणं चैव दूषणं परिवर्जयेत् ।
न सत्यमपि भाषेत जपहोमार्चनादिषु ॥ ८

वाङ्मनःकर्मभिर्नित्यं निःस्पृहो वनितादिषु ।
वर्जयेद्गीतवाद्यादिश्रवणं नृत्यदर्शनम् ॥ ९

असङ्कल्पितकृत्यं च वर्जयेन्मर्दनादिकम् ।
त्यजेदुष्णोदकस्नानं सुगन्धामलकादिकान् ॥ १०

भूशय्या ब्रह्मचर्या च मौनचर्याऽनसूयता ।
नित्यं त्रिषवणस्नानं क्षुरकर्मविवर्जनम् ॥ ११

नित्यपूजा नित्यदानं कमलास्तुतिपूजनम् ।
नैमित्तिकार्चनं चैव विश्वासो गुरुदेवयोः ॥ १२

जपनिष्ठा द्वादशैते धर्माःस्युर्मन्त्रसिद्धिदाः ।
शक्तौ त्रिषवणस्नानं अन्यथा द्विः सकृत्सकृत् ॥ १३

स्नानपूजाजपध्यानहोमतर्पणतत्परः ।
निष्कामो देवतायां च सर्वकर्मनिवेदकः ॥ १४

श्रीकामो पश्चिमे भूत्वा उत्तरे शान्तिकं भवेत् ।
ईशाने शत्रुनाशः स्यादाग्नेये शत्रुदायकः ॥ १५

नैर्ऋते शत्रुभीतिः स्यात् वायव्येऽरिपलायनम् ।
मोक्षार्थी प्राङ्मुखः कुर्यात् दक्षिणे त्वाभिचारकः[1] ॥ १६

एवमादींश्च नियमान् पुरश्चरणकृच्चरेत् ।
जपस्य लक्षणं त्रेधा स वाच्योपांशुमानसः ॥ १७

स वाच्यो यस्तूच्चरितैः मन्त्रैः स्पष्टपदाक्षरैः ।
मन्त्रमुच्चारयेद्वाचा जपयज्ञः स वाचिकः ॥ १८

---

१. त्वाभिचारकृत्

शनैरुच्चारयेन्मन्त्रमीषदोष्ठं प्रलम्बयेत् ।
किञ्चिच्छ्रवणयोग्यः स्यात् उपांशुः स जपः स्मृतः ॥ १९

धिया यदक्षरश्रेणीं वर्णस्वरपदात्मिकाम् ।
उच्चरेदथ संस्मृत्य स जपो मानसः स्मृतः ॥ २०

पशुभावे स्थिता मन्त्राः केवला अनिरूपिताः ।
ततः स्वैरुच्चरिताः प्रभुत्वं प्राप्नुवन्ति ते ॥ २१

उच्चैर्जपोऽधमः प्रोक्त उपांशुर्मध्यमःस्मृतः ।
उत्तमो मानसो यस्तु त्रिविधः कथ्यते जपः ॥ २२

न दोषो मानसे जाप्ये सर्वदेशेऽपि सर्वदा ।
जपनिष्ठो द्विजश्रेष्ठः सर्वयज्ञफलं लभेत् ॥ २३

सर्वेषामेव यज्ञानां जपयज्ञः प्रशस्यते ।
अहिंसयापि भूतानां जायते तु महत्फलम् ॥ २४

यावन्तः कर्मयज्ञाः स्युः प्रदीप्तामिव पांसु च? ।
ते सर्वे जपयज्ञस्य कलां नार्हन्ति षोडशीम् ॥ २५

जपेन देवता नित्यं स्तूयमाना प्रसीदति ।
प्रसन्ना विपुलान्भोगान् दद्यान्मुक्तिं च शाश्वतीम् ॥ २६

मानसः सिद्धिकामानां पुष्टिकामैरुपांशुकः ।
वाचिको मारणे चैवं फलं ज्ञात्वा जपेद्बुधः ॥ २७

सूर्यस्याग्नेर्गुरोरिन्दोर्दीपस्य ज्वलितस्य च ।
विप्राणां च दिवा चैव सान्निध्यं परिकल्पयेत् ॥ २८

मनःसंयमनं शौचं मौनं मन्त्रार्थचिन्तनम् ।
अव्यग्रत्वमनिर्वेदो जपसम्पत्तिहेतवः ॥ २९

सोष्णीषकञ्चुको नग्नो मुक्तकेशो मलावृतः ।
अपवित्रकरोऽशुद्धः प्रलपन्न जपेत्क्वचित् ॥ ३०

अपावृतकरौ कृत्वा शिरसा प्रावृतोऽपि च ।
चिन्ताव्याकुलचित्तो वा उत्कृष्टोत्सव एव वा ॥ ३१

भ्रान्तः क्षुधान्वितः क्रुद्धो ह्यन्यसङ्क्रान्तमानसः ।
अल्पाशनः शयानो वा गच्छन्नुत्थित एव वा ॥ ३२

रथ्यायामशुभस्थाने न जपेत्तिमिरावृते ।
उपानद्गूढपादो वा उत्कृष्टासन एव वा ॥ ३३

पतितानामन्त्यजानां दर्शने भाषणे श्रुते ।
क्षुतेऽधोवायुगमने साधको जपमुत्सृजेत् ॥ ३४

प्राप्तावाचम्य चैतेषां प्राणायामषडङ्गकम् ।
कृत्वा पश्चादनुष्ठेयं यद्वा सूर्यादिदर्शनम् ॥ ३५

मार्जारं कुक्कुटं क्रौञ्चं श्वानं गृध्रं खरं कपिम् ।
दृष्ट्वाऽऽचम्य चरेत्कर्म स्पृष्ट्वा स्नानं समाचरेत् ॥ ३६

अशुचिर्वा शुचिर्वापि गच्छन् तिष्ठन् स्वपन्नपि ।
मन्त्रैकशरणो विद्वान् मनसैव सदाभ्यसेत् ॥ ३७

गृहे जपः समः प्रोक्तो गोष्ठे दशगुणं स्मृतम् ।
आरामे च तथारण्ये सहस्रगुणमुच्यते ॥ ३८

अयुतं पर्वते पुण्ये नद्यां दशगुणं भवेत् ।
कोटिं देवालये प्राहुरनन्तं लक्ष्मिसन्निधौ +॥ ३९

पूजा त्रैकालिकी नित्यं जपस्तर्पणमेव च ।
होमो ब्राह्मणतृप्तिश्च पञ्चाङ्गैषा पुरस्क्रिया ॥ ४०

एवमादींश्च नियमान् कृत्वा लक्षं जपेन्मनुम् ।
सर्वपापविनिर्मुक्तो जीवेद्वर्षशतं सुखी ॥ ४१

लक्षद्वयेन पापानि सप्तजन्मकृतान्यपि ।
नाशयेदचिराल्लक्ष्मीः साधकस्य न संशयः ॥ ४२

जप्त्वा लक्षत्रयं मन्त्री लक्ष्मीर्मन्त्रैकविग्रहा ।
पातकं नाशयेदाशु यदि जन्मसहस्रगम् ॥ ४३

जप्त्वा विद्यां चतुर्लक्षं महावागीश्वरो भवेत् ।
पञ्चलक्षाद्दरिद्रोऽपि साक्षाद्वैश्रवणायते ॥ ४४

जप्त्वा षल्लक्षमेवं वै महाविद्याधरेश्वरः ।
जप्त्वैवं सप्त लक्षाणि खेचरीमेलनं भवेत् ॥ ४५

अष्टलक्षप्रमाणं तु जप्त्वा विद्यां चतुर्मुख ।
अणिमाद्यष्टसिद्धीशो जायते तात पूजकः[1] ॥ ४६

नवलक्षप्रमाणं तु श्रीविद्यां प्रजपेद्वशी ।
चक्रसंस्थास्तु योगिन्यः प्रयच्छन्ति समीप्सितम् ॥ ४७

---

+ लक्ष्मीसन्निधौ इति स्थाने ।

१. देवपूजकः

दशलक्षं जपेद्विद्वान् श्रीविद्यां राज्यदायिनीम् ।
पञ्चाशत्कोटिविस्तीर्णपृथिवीशासको भवेत् ॥ ४८

लक्षादेकादशात्तात मोहिनीरूपधारकः ।
यक्षिणीं वाथ गन्धर्वां किन्नरीं वासुरेश्वरीम् ॥ ४९

सिद्धकन्यां नागकन्यां राजकन्यां च खेचरीम् ।
विद्याधरीमप्सरसां ऋषिकन्यां तथोर्वशीम् ॥ ५०

मोहयेदचिरादेव मायामन्मथविग्रहः ।
जपेद् द्वादशलक्षं तु महालक्ष्मीमनुं बुधः ॥ ५१

अष्टकोणं समारभ्य देवताः पृथगीरिताः ।
तासां रूपधरो विद्वान् तादृग्रूपेण भासते ॥ ५२

लक्षात्त्रयोदशात् तात तवाकारं समश्नुते ।
चतुर्दशाच्छिवाकारं लक्षात्प्राप्नोति साधकः ॥ ५३

लक्षात्पञ्चदशान्मन्त्री मदाकारो न संशयः ।
अर्धलक्षात्पञ्चदशाल्लक्ष्मीरूपो भवेद्ध्रुवम् ॥ ५४

षोडशादैक्यसंसिद्धिर्लक्ष्म्या नारायणस्य च
ब्रह्मात्मैक्यमिति प्रोक्तं सच्चिदानन्दरूपकम् ॥ ५५

इतः परं फलं किञ्चिदस्ति किं कमलासन ।
एवंविधायै संसिद्ध्यै यतेत नियतव्रतः ॥ ५६

इति श्रीमहालक्ष्मीकल्पे नारदब्रह्मोमामहेश्वर-
संवादे प्रत्यक्षसिद्धिप्रदे महालक्ष्मी-
रत्न (कल्प) कोशाख्ये
षोडशोऽध्यायः ॥

## ॥ सप्तदशोऽध्यायः ॥

आसनस्थो जपेन्मन्त्री मन्त्रार्थगतमानसः ।
कुशादीनां वरेण्यानामासनं कल्पयेद्बुधः ॥ १

स्वस्तिकादिक्रमेणैव संविशेत्तत्र निश्चलः ।
स्तम्भने गजचर्मोक्तं मारणे माहिषं तथा ॥ २

मेषीचर्म तथोच्चाटे खड्गिजं वश्यकर्मणि ।
विद्वेषे जाम्बुकं प्रोक्तं भवेद्गोचर्म शान्तिके ॥ ३

सर्वसिद्धौ व्याघ्रचर्म ज्ञानसिद्धौ मृगाजिनम् ।
वस्त्रासने रोगहरं वेत्रजे विपुलाःश्रियः ॥ ४

कौशेयं पौष्टिके कार्ये कम्वलं दुःखमोचनम् ।
अभिचारे कृष्णवर्णं रक्तं वश्यादिकर्मणि ॥ ५

शान्तिके धवलं प्रोक्तं चित्रकं सर्वकर्मसु ।
वशांसने तु दारिद्र्यं दौर्भाग्यं दारुकासने ॥ ६

धरित्र्यां दुःखसम्पत्तिः पाषाणे दुःखसंभवः ।
तृणासने यशोहानिः पल्लवे चित्तविभ्रमः ॥ ७

इष्टकायामसिद्धिस्यात् एतत्साधारणं विदुः ।
आकर्षणं वज्रमूले मोहनं चूतमूलके ॥ ८

कदम्वमूले वाक्सिद्धिः करवीरस्य भाषणम् ।
वलाय तिन्त्रिणीमूले त्वाकर्षायार्कमूलके ॥ ९

अश्वत्थमूले स्तम्भाय विद्यालाभाय वुर्बुरे ।
अर्जुने ज्ञेयमुच्चाटमविघ्नाय शमीतरोः ॥ १०

दर्शनाय वटे मूले निग्रहाय तु नैम्बिके ।
देवालये ज्ञानसिद्धौ योगसिद्धौ गृहान्तरे ॥ ११

मोक्षार्थी(?) वर्तिकामूले भाग्यार्थी नलिनीतटे ।
मोक्षार्थी बिल्वमूले स्यात् ऐश्वर्यार्थी तु तत्र तु ॥ १२

भूमौ जपेद्भूमिकार्ये जलकार्ये जले जपेत् ।
दारुपीठे वायुकार्ये वह्निकार्ये शिलातले ॥ १३

सर्वाण्यपि च कर्माणि व्याघ्रचर्मणि कारयेत् ।
मालाभिरक्षसंज्ञाभिर्जपं कुर्याद्विचक्षणः ॥ १४

रुद्राक्षशङ्खपद्माख्यपुत्रदीपकमौक्तिकैः ॥
स्फाटिकैर्मणिरत्नैश्च सौवर्णैर्विद्रुमैस्तथा ॥ १५

कुशैःसर्वे द्वादशभिर्गृहस्थस्याक्षमालिका ।
अङ्गुलीगणनादेकं रेखयाष्टगुणं भवेत् ॥ १६

दश स्यात्तुलसीदत्तं सहस्रं शङ्खजं भवेत् ।
अयुतं पुत्रजीवेन लक्षं मौक्तिकमालाया ॥ १७

स्फाटिकैर्दशलक्षं स्यात् वज्रात्कोटिगुणं भवेत् ।
वैदूर्याद्दशकोटिःस्यात् शतकोटिस्तु नीलकैः ॥ १८

सहस्रकोटिः पुष्पेण पद्मतोऽनन्तमुच्यते ।
रुद्राक्षैः कोटिकोटिः स्यादक्षमालाः प्रकीर्तिताः ॥ १९

अष्टोत्तरशतैर्माला पञ्चाशच्चतुरुत्तरैः ।
सप्तविंशतिभिः कुर्यात्सर्वसाधारणे जपे ॥ २०

मोक्षार्थी पञ्चविंशत्या धनार्थी त्रिंशता जपेत् ।
पुत्रार्थी सप्तविंशत्या पञ्चदश्याऽभिचारके ॥ २१

अनुलोमविलोमार्णैर्मातृकायाः सबिन्दुभिः ।
क्षमेरुगैः साष्टवर्गैर्माला स्याद्योगिनां शुभा ॥ २२

गोपुच्छसदृशी कार्या एकाग्रैव समेरुका ।
मुखं मुखेन संयोज्य पुच्छं पुच्छेन योजयेत् ॥ २३

पोतव्या सितसूत्राद्यैस्तत्तत्कर्मानुरूपतः ।
जपमालां विधायेत्थं तत्संस्कारमथाचरेत् ॥ २४

क्षालयेत्पञ्चगव्येन सद्योजातेन सज्जलैः ।
चन्दनागरुगन्धाद्यैर्वामदेवेन चार्चयेत् ॥ २५

धूपयेत्तामघोरेण लिम्पयेत्तत्पुरुषेण तु ।
मन्त्रयेत्पञ्चमेनैव प्रत्येकं तु शतं शतम् ॥ २६

मेरुं च पञ्चमेनैव तथा मन्त्रेण मन्त्रयेत् ।
येन प्रतिष्ठिता माला तन्मन्त्रं प्रजपेद्बुधः ॥ २७

अन्यमन्त्रजपं विद्वान्नकुर्यात्कर्हिचिद्वशी ।
न स्पृशेद्वामहस्तेन करभ्रष्टां न कारयेत् ॥ २८

अङ्गुष्ठं मोक्षदं विद्यात्तर्जनी शत्रुनाशिनी ।
मध्यमा धनसिद्धौ स्याच्छान्तिकर्मण्यनामिका ॥ २९

*कनिष्ठाऽऽकर्षणी ज्ञेया जपकर्मणि सिद्धिदा ।
अङ्गुष्ठेन विना कर्म कृतं यदफलं भवेत् ॥ ३०

तर्जन्या न स्पृशेदेवं कम्पयेन्नापि धूनयेत् ।
अङ्गुष्ठपर्वमध्यस्थं परिवर्तं समाचरेत् ॥ ३१

आरभ्यानामिकामूलं प्रादक्षिण्येन तत्क्रमात् ।
मध्यमामूलपर्यन्तं जपेद्दशसु पर्वसु ॥ ३२

अङ्गुल्योत्पादने कार्ये पर्वभिः पापमुक्तये ।
सर्वसम्पत्समृध्यै तु तुलसीवनमालया ॥ ३३

शङ्खेनोच्चाटने कार्ये विद्वेषे विमतक्षये ।
कन्यासिद्धौ पद्मबीजं भोगसिद्धौ च भाग्यके ॥ ३४

पुत्रसिद्धौ पुत्रजीवं वीर्यसिद्धौ तु मौक्तिकम् ।
ज्ञाने सारस्वते श्रेष्ठं स्फटिकं मोक्षकेऽपि च ॥ ३५

शौर्यसिद्धौ वज्ररत्नं मोहनाय विदूरजम् ।
इन्द्रोपलं प्रभुत्वे च पुष्परागमभीष्टके ॥ ३६

मातृका सर्वसिद्धौ तु रुद्राक्षं कीर्तिदायकम् ।
मातृकायां तु ये वर्णास्तेऽप्रमेयगुणान्विताः ॥ ३७

तत्र पञ्चाशद्वर्णेषु विधिवद्वर्णमेककम् ।
चिरं ध्यात्वा शनैः कुर्याज्जपं सर्वार्थसिद्धये ॥ ३८

---

* तर्जनी कनिष्ठयोः भिन्नफलदत्व मन्यत्र ।

अतिह्रस्वे व्याधिपीडा अतिदीर्घे तपःक्षयः ।
अक्षराक्षरसंयुक्तं जपेन्मौक्तिकहारवत् ॥ ३९

इति श्रीमहालक्ष्मीकल्पे नारायणब्रह्मोमामहेश्वर-
संवादे प्रत्यक्षसिद्धिप्रदे महालक्ष्मी -
रत्न (कल्प) कोशाख्ये
सप्तदशोऽध्यायः ॥

## ॥ अष्टादशोऽध्यायः ॥

अथ होमविधिं वक्ष्ये सावधानोऽवधारय ।
कुण्डमादौ प्रकल्प्येत तत्तत्कर्मानुरूपतः ॥ १

सर्वेषु काम्यहोमेषु चतुरस्त्रं प्रशस्यते ।
अर्धचन्द्राकृतौ कुण्डे शान्तिकर्माणि कारयेत् ॥ २

योन्याकारे प्रजाकामः श्रीकामस्य तु वर्तुलम् ।
पद्माकारमये कुण्डे वृष्टिकामस्तु कारयेत् ॥ ३

अष्टाश्रं रोगनाशाय मोक्षकामस्य वर्तुलम् ।
योनिकुण्डे भवेत्स्वामी भवेच्चाकृष्टिरुत्तमा ॥ ४

वर्तुले च भवेल्लक्ष्मीरर्धचन्द्रे त्रयं भवेत् ।
नव त्रिकोणकुण्डे तु खेचरत्वं प्रजायते ॥ ५

चतुरस्त्रे भवेच्छान्तिर्लक्ष्मीः पुष्टिररोगता ।
पद्माङ्के सर्वसम्पत्तिरचिरात्तात जायते ॥ ६

त्रिमेखलानि सर्वाणि हस्तमात्रप्रमाणतः ।
यावत्कुण्डस्य विस्तारं तावत्तु खननं मतम् ॥ ७

इत्थं कृत्वा विशेषज्ञः पश्चाद्धोमं समाचरेत् ।
गृहस्य दक्षिणे पार्श्वे कुण्डं कृत्वा विधानतः ॥ ८

विघ्नध्वंसकरीं पूज्य हसन्तीं विघ्नदेवताम् ।
पुण्याहं वाचयेत्पश्चात् प्रोक्षयेत्कुण्डमध्यमे ॥ ९

कुण्डस्य पुरतो भागे श्रीचक्रस्थां श्रियं पराम् ।
पूर्वोक्तध्यानमार्गेण ध्यात्वात्माभिमुखस्थिताम् ॥ १०

नवमावरणेनापि द्वादशावरणेन वा ।
पूजयेत्तार्क्ष्यसंरूढविष्णुवक्षःस्थलालयाम् ॥ ११

एवं क्रमेण संपूज्य सर्वमुल्लेखनादिकम् ।
स्वगृह्योक्तविधानेन आज्यभागान्तमाचरेत् ॥ १२

कुण्डस्य मध्यमे भागे हुतभुग्वर्तते ज्वलन् (?)
अथाग्निरूपं वक्ष्येऽहं सिध्यर्थं सर्वकर्मणाम् ॥ १३

अज्ञा(त्वा) यानुकृते होमे सर्वं निष्फलतां व्रजेत् ।
द्विमुखं चैकहृदयं चतुःश्रोत्रं द्विनासिकम् ॥ १४

आस्यद्वयं च षण्णेत्रं पिङ्गलं सप्तहस्तकम् ।
त्रिमेखलं त्रिपादं च सप्तजिह्वाभिरावृतम् ॥ १५

चतुःश्रृङ्गमजारूढं बालादित्यसमप्रभम् ।
उपवीतसमायुक्तं जटामकुटमण्डितम् ॥ १६

दक्षिणे तु चतुर्हस्तं त्रिहस्तं वामपार्श्वके ।
स्रुक्स्रुवौ चाक्षमालां च शक्तिं दक्षिणके करे ॥ १७

तोमरं व्यजनं चैव घृतपात्रं च वामके ।
हिरण्याद्याश्चतस्रश्च जिह्वा दक्षिणवक्त्रके ॥ १८

तिस्रस्तु सुप्रभाद्याश्च जिह्वा या वामवक्त्रके ।
प्रत्यङ्मुखाग्निरासीनः प्राङ्मुखो याजको भवेत् ॥ १९

*हिरण्या कनका रक्ता कृष्णा चैव तु सुप्रभा ।
अतिरक्ता बहूरूपा जिह्वाः सप्त प्रकीर्तिताः ॥ २०

हिरण्या वारुणी जिह्वा वायव्ये कनकप्रभा ।
रक्ता चोत्तरजिह्वा तु कृष्णा याम्यां दिशि स्थिता ॥ २१

सुप्रभा पूर्वजिह्वा स्यात् अतिरक्तानिले(?) स्थिता ।
बहुरूपा तु नैरृत्यां जिह्वास्थानं प्रकीर्तितम् ॥ २२

हिरण्यायां हुनेदिध्मं कनकायां तिलं हुनेत् ।
रक्तायां तु यवाः प्रोक्ताः कृष्णायां धान्यकं हुनेत् ॥ २३

---

ग्रन्थान्तरे अग्निजिह्वानामानि -

कालीं कराली च मनोजवा च
सुलोहिनी चाप्य तु धूम्रवर्णा ।
स्फुलिङ्गिनी विश्वरुचिश्च देवी
लीलायमाना इति सप्त जिह्वाः ॥"

जिह्वास्थानान्यधिकृत्य चैवम् -

"सुवर्णा वारुणी जिह्वा मध्यमा कनका स्मृता ।
रक्ता चैवोत्तरा जिह्वा कृष्णा याम्यादिशि स्थिता ।
सुप्रभा पूर्वदिग्जिह्वा ह्यतिरक्ताग्निगोचरे ।
ऐशाने वहुरूपा च जिह्वास्थानान्यनुक्रमात् ॥"

जिह्वाहोमे विशेष एवम् -

"विवाहे वारुणी जिह्वा मध्यमा यज्ञकर्मणि ।
उत्तरा चोपनयने दक्षिणा पितृकर्मसु ॥
प्राचीना सर्वकामेषु आग्नेयी शान्तिकर्मसु ।
ऐशानी चोग्रकार्येषु होत होमस्य लक्षणम्" इति

सुप्रभायां हुनेत्सक्तून् अतिरक्ता(?) घृताहुतौ ।
बहुरूपा तु सिद्धार्थं एवं सर्वं हुनेत्सुधीः ॥ २४

हिरण्यादीन्यजानानः यो विद्वानग्निसन्निधौ ।
होममारभते मूर्खः स भवेत् ब्रह्मघातकः ॥ २५

अग्नेस्तु बाध्यमानत्वात् हविर्भाक् बाधितो भवेत् ।
तस्माद् ज्ञात्वैव कर्तव्यं जिह्वाभेदं द्विजोत्तमैः ॥ २६

जिह्वाभेदं प्रवक्ष्यामि तच्छृणुष्व महामते
कुण्डस्य पूर्वदिग्भागे काली जिह्वा प्रकीर्तिता ॥ २७

आग्नेय्यां तु कराली स्याद्दक्षिणे तु मनोजवा ।
सलोहिता च नैर्ऋत्यां धूम्रवर्णा च वारुणे ॥ २८

स्फुलिङ्गिनी तु वायव्ये सौम्ये विश्वरुचिः स्मृता ।
काल्यां कराल्यां जिह्वायां शान्तिकं पौष्टिकं भवेत् ॥ २९

मनोजवायां जिह्वायामभिचारो विधीयते ।
भूतप्रेतपिशाचादिशान्त्यै लोहितजिह्वके ॥ ३०

जुहुयाद्धूम्रवर्णायां वृष्टिकामैर्विधीयते ।
स्फुलिङ्गिन्यां तु जिह्वायां तस्यामुच्चाटनं भवेत् ॥ ३१

या तु विश्वरुचिर्जिह्वा कुण्डस्योत्तरभागतः ।
सर्वार्थसाधिका सेति लक्ष्मीस्तत्र प्रतिष्ठिता ॥ ३२

एवं ज्ञात्वैव जुहुयात् तत्तत्कर्मानुरूपतः ।

अग्निकर्णे हुतं यत्तु कुर्याच्चेद्व्याधिपीडनम् ॥ ३३

नासिकायां मनोदुःखं चक्षुषोर्नाशनं भवेत् ।
क्लेशदारिद्र्यकृत्प्रोक्तं तस्माज्जिह्वा तु होमयेत् ॥ ३४

यत्र काष्ठं ततः* श्रोत्रं यत्र धूमः सनासिकः ।
यत्राल्पज्वलितं नेत्रं यत्र भस्म तु तच्छिरः ॥ ३५

---

* अत्र प्रयोग पारिजात ग्रन्थोक्ताः कारिका एवम् -
"यत्र काष्ठं तत्र कर्णौ हुनेच्चेद् व्याधिकृन्नरः ॥
धूमस्थाने शिरः प्रोक्तं मनोदुःखं भवेदिह ॥
यत्राल्पज्वलनं नेत्रं यजमानस्य नाशनम् ।
भस्मस्थाने तु केशः स्यात्स्थाननाशे धनक्षयः ॥
अङ्गारे नासिकां विद्यान्मनोदुःखं विदुर्बुधाः ।
यत्र प्रज्वलनं तत्र जिह्वा चैव प्रकीर्तिता ॥
गजवाजिप्रणादे तु वृद्धि : शुभफल प्रदः ।" इति ।
यत्र काष्ठमिदं कर्णौ यत्र धूमस्तु नासिका ।
काष्ठमल्पज्वलन्नेत्रं ज्वलनं मूर्ध्नि विन्यसेत् ।
प्रज्वाला वदिन जिह्वायामेतद्धोमस्य लक्षणम् ।
अग्नौ कर्णाहुतिं कुर्याद्दुर्भिक्षं व्याधिपीडनम् ।
नासिकायां मनोदुःखं चक्षुषी ग्रामनाशनम् ।
मूर्ध्निस्थानेऽशुभं कुर्याद्राजा राष्ट्रं विनश्यति ।
तस्मात्सर्वप्रयत्नेन जिह्वायां होमन्न चरेत् ।
जिह्वास्थानं तु न ज्ञात्वा होमं यः कुरुते नरः ।
स होमो निष्फलो भूयात् यष्टुःहोमस्य दुर्गतिः ॥

* ग्रन्थान्तरे अग्निजिह्वानामानि -
"काली कराली च मनोजवा च ।
सुलोहिनी चापि सुधूम्रवर्णा ।

यत्रैव ज्वलितो वह्निस्तत्र जिह्वाः प्रकीर्तिताः ।
इत्थं ज्ञात्वा द्विजश्रेष्ठः चक्रं संभाव्य चक्रवित् ॥ ३६
तत्रावाह्य महालक्ष्मीं पूजयेदुपचारतः ॥

इति श्रीमहालक्ष्मीकल्पे नारायणब्रह्मोमामहेश्वर-
संवादे प्रत्यक्षसिद्धिप्रदे महालक्ष्मी -
रत्न (कल्प) कोशाख्ये
अष्टादशोऽध्यायः ॥

## ॥ एकोनविंशोऽध्यायः ॥

*उपभोगं प्रवक्ष्यामि होमप्रकरणे तव ।
कमलैश्च त्रिमध्वक्तैर्जुहुयान्मन्त्रसिद्धये ॥ १

तस्य गेहे महालक्ष्मीर्वसत्यम्बुजसम्भव ।
चम्पकैः स्वर्णसिद्धिः स्याद्राज्यसिद्धिस्तु पङ्कजैः ॥ २

उत्पलैरङ्गनावश्यं वकुलै राजवश्यकम् ।
मल्लिकाभिर्जयेत्सर्वं जातीपुष्पैः कविर्भवेत् ॥ ३

मल्लिकामालतीजातीपुष्पैराज्यमधुप्लुतैः ।
हुतैर्भवति वागीशो मूढोऽपि कमलासन ॥ ४

करवीरजपापुष्पाण्याज्ययुक्तानि हे विधे ।
हुत्वाऽऽकर्षयते मन्त्री स्वर्भूपातालयोषितः ॥ ५

दूर्वाभिराज्ययुक्ताभिर्जुहुयादायुषे नरः ।
गलूचीमाज्यसिक्तां तु जुहुयात्सप्तजिह्वकम् ॥ ६

अष्टोत्तरसहस्रं तु स जीवेच्छरदां शतम् ।
कल्हारैर्भूमिमाप्नेति केतकीभिः प्रियो भवेत् ॥ ७

चन्द्रकस्तूरिकामिश्रं हुत्वा कुङ्कुमसंयुतम् ।
तत्र कन्दर्पसौभाग्यादसौ भाग्याधिको भवेत् ॥ ८

---

* फलभेदमित्यर्थः

हुत्वा तिलान् घृताभ्यक्तान् दीर्घमायुरवाप्नुयात् ।
अक्षतैरायुराप्नोति तिलैर्मृत्युञ्जयो भवेत् ॥ ९

श्रीगन्धमगरुं वापि कर्पूरं पुरसंयुतम् ।
हुत्वामरपुरस्त्रीणां सदा विक्षोभकृद्भवेत् ॥ १०

आरभ्यार्कदिनं मन्त्री दशरात्रं दिने दिने ।
आराध्यार्कसमिद्धोमादारोग्यं लभतेऽचिरात् ॥ ११

कुङ्कुमैरश्वसिद्धिः स्याद्राज्यसिद्धिस्तु चन्दनैः ।
कर्पूरैर्हिमवार्यद्रैर्होमे रत्नसंमृद्धिकृत् ॥ १२

शालिभिर्जुह्वतो नित्यमष्टोत्तरसहस्रकम् ।
अचिरादेव महती लक्ष्मीः संजायते ध्रुवम् ॥ १३

रक्ताम्भोरुहहोमेन दासो भवति राज्यकृत् ।
दुर्भगः सुभगो भूयात् हुत्वा (नव)कल्हार होमकम् (मतः) । १४

कृष्णैरगरुभिर्होमः सर्वसौभाग्यकृन्नृणाम् ।
प्रसूनैर्जुहुयान्मन्त्री लक्ष्मीपल्लवसंयुतैः ॥ १५

नन्द्यावर्तप्रसूनैर्वा सिद्धार्थैश्च घृताप्लुतैः ।
महतीं श्रियमाप्नोति मान्यते सर्वजन्तुभिः ॥ १६

ग्रहा गुग्गुलुहोमेन नाशं यान्ति न संशयः ।
हुत्वा फलं त्रिमध्वक्तं कृत्वा स्मृत्वा परां श्रियम् ॥ १७

खेचरो जायते विद्वान् हुत्वा रात्रौ चतुष्पथे ।
मरीचिजीरकयुतैः नारिकेलरसैर्युतैः ॥ १८

सुशुद्धैराज्यसंपक्वैरपूपैराज्यलोलितैः ।
जुहुयात्पायसाहारो मन्त्रवित्तु जितेन्द्रियः ॥ १९

अष्टोत्तरशतं नित्यं मण्डलाद्धनदो भवेत् ।
कस्तूरीभिः कृतो होमो लक्ष्मीसान्निध्यकृद्भवेत् ॥ २०

हविषा दुग्धमिश्रेण जुहुयाद्वित्तवान् भवेत् (?) ।
जपापुष्पेण जुहुयाद् अष्टोत्तरसहस्रकम् ॥ २१

गृहीत्वा प्रजपेद्भस्म नागवल्लीरसान्वितम् ।
तिलकक्रियया ब्रह्मन् सर्ववश्यकरं भवेत् ॥ २२

व्यवहारजयः क्षौद्रैर्मधुरैः प्रीतिरुत्तमा ।
आकृष्टिर्लवणैर्होमे सप्तरात्रान्न संशयः ॥ २३

ब्रह्मवृक्षसमित्पुष्पैर्ब्राह्मणान्वशयेद्वशी ।
जातीपुष्पैश्च राजानं वैश्यान् रक्तोत्पलैः सुधीः ॥ २४

शूद्रान्नीलोत्पलैर्हुत्वा वशयेन्मन्त्रवित्तमः ।
निशापूर्णकृतो होमः शत्रूणां स्तम्भनं भवेत् ॥ २५

पयसा विजयो होमे दध्ना परत्रिनाशकृत् ।
कदलीपुष्पहोमेन कल्याणं लभते नरः ॥ २६

पुष्पैर्मधूकजैर्हुत्वा नाशमायान्ति च स्त्रियः ।
परराज्यप्रदो होमो दूर्वाभिर्घृतलोलितैः (?) ॥ २७

सर्षपैः शत्रुशान्तिः स्यात् पायसैरन्नसिद्धिकृत् ।
पुत्रदीपैश्च पुत्रःस्यात् पाटलैः कमलोद्भव ॥ २८

तथा दधिमधुक्षीरमिश्रलाजादिहोमतः ।
न बाध्यते महारोगैः कालमृत्युग्रहादिभिः ॥ २९

कुसुम्भकुसुमैर्होमः पालाशकुसुमैरपि ।
मन्त्रसिद्धिर्जगद्वश्यं जायते कमलोद्भव ॥ ३०

अशोकवह्नौ जुहुयात् तन्मूलैराज्यलोलितैः ।
वशयेदचिरादेव त्रैलोक्यमपि मन्त्रवित् ॥ ३१

जुहुयात्तण्डुलैः शुद्धैरर्काग्नौ नियतो वशी ।
राज्यश्रियमवाप्नोति साधको नात्रसंशयः ॥ ३२

जुहुयात्खादिरे वह्नौ तण्डुलैर्मधुनोक्षितैः ।
राजा वश्यो भवेत्क्षिप्रं महालक्ष्मीश्च वर्धते ॥ ३३

मधुनाक्तारुणाम्भोजं जुहुयाल्लक्षमादरात् ।
न मुञ्चति रमा तस्य वंशमाभूतसंप्लवम् ॥ ३४

बिल्वच्छायामधिवसन् बिल्वमिश्रहविष्यभुक् ।
संवत्सरद्वयं भुक्त्वा तत्फलैरथवाम्बुजैः ॥ ३५

साधकेन्द्रो महालक्ष्मीं चक्षुषा पश्यति ध्रुवम् ।
बिल्वपत्रैःफलैर्वापि तत्समिद्भिर्हुनेद्यदि ॥ ३६

लक्षमात्रं व्रती मन्त्री श्रिया वैश्रवणोपमः ।
एवं हुत्वा ततः पश्चात् स्वगृह्योक्तविधानतः ॥ ३७

प्रायश्चित्तं ततःकृत्वा ततःशान्ति जपेद्वशी ।
पश्चाद्ध्यात्वा महालक्ष्मीं सर्वावरणसंयुताम् ॥ ३८

साधकाभीष्टफलदां जप्त्वा मूलं यथाविधि ।
स्तोत्रैः संप्रीणयेद्देवीं नमस्कारं ततश्चरेत् ॥ ३९

अङ्गन्यासकरन्यासौ कृत्वा लक्ष्मीमतन्द्रितः ।
चिति संयोजयेत् विद्वान् खेचर्या कमलासन ॥ ४०

इति श्रीमहालक्ष्मीकल्पे नारायणब्रह्मोमामहेश्वर-
संवादे प्रत्यक्षसिद्धिप्रदे महालक्ष्मी-
रत्न (कल्प) कोशाख्येएकोन-
त्रिंशोऽध्यायः ॥

## ॥ विंशोऽध्यायः ॥

ब्रह्मा -

नमस्ते वासुदेवाय सर्वलोकैकसाक्षिणे ।
श्रीसूक्तं सप्रकारं मे वद कल्याणकारणम् ॥ १

गोप्याद्गोप्यतरं सूक्तं सर्वसम्पत्समृद्धिदम् ।
यस्योपासनया विष्णो साक्षाद्वैश्रवणायते ॥ २

तादृशं च श्रियःसूक्तं सप्रकारं वद प्रभो ।

नारायणः -

श्रीसूक्तं प्रथमं वक्ष्ये सर्वसौभाग्यकारणम् ॥ ३

श्रीसूक्तस्य महालक्ष्म्या जातवेदा ऋषिः स्मृतः ।
अनुष्टुबादिकं छन्दो देवता श्रीः समीरिता ॥ ४

हिरण्यवर्णां वीजं तु आवह शक्तिरुच्यते ।
सर्वसौभाग्यसिद्ध्यर्थे विनियोगश्चतुर्मुख ॥ ५

अष्टादश ऋचां योज्यं त्रिचं चाद्य प्रकारतः ।
अङ्गन्यासकरन्यासौ कृत्वा व्यापकमाचरेत् ॥ ६

न्यासप्रकरणप्रोक्तन्यासजालानि विन्यसेत् ।
ततो ध्यायेन्महालक्ष्मीं सर्वसौभाग्यदायिनीम् ॥ ७

अरुणनलिनसंस्था तद्रजःपुञ्जवर्णा
करकमलधृतेष्टाभीतियुग्माम्बुजा च ।
मणिमकुटविचित्रालङ्कृताऽऽकल्पजालैः
सकलभुवनमाता सन्ततं श्रीः श्रियै नः ॥ ८

एवं ध्यात्वा जपेद्विद्वान् सहस्रं षोडशं ततः ।
दशांशं तर्पणं कुर्यात् शतांशैः कमलैर्हुनेत् ॥ ९

यजनं ब्राह्मणान् पश्चात् सहस्रांशं च भोजयेत् ।
एवं कृत्वा पुरश्चर्यां पश्चात्काम्यानि साधयेत् ॥ १०

होमप्रकरणप्रोक्तैः पूर्वोक्तकुसुमादिभिः ।
श्रीसूक्तेनैव होतव्यं तत्तत्काम्यप्रसिद्धये ॥ ११

श्रीसूक्तयन्त्रं वक्ष्यामि महालक्ष्म्या विशेषतः ।
सर्वसौभाग्यदं पुण्यं सर्वपापप्रणाशनम् ॥ १२

सर्वैश्वर्यकरं दिव्यं सर्वदारिद्र्यनाशनम् ।
कर्णिकाकेसरोपेतवस्वादित्यदलं लिखेत् ॥ १३

षोडशं पत्रमालिख्य भूपुरेण समन्वितम् ।
श्रीबीजं साध्यसंयुक्तं कर्णिकायां विलिख्य तु ॥ १४

वस्वादित्यद्व्यष्टसङ्ख्यपत्रेष्वपि यथाक्रमम् ।
श्रीसूक्तऋचमर्धार्धं आलिख्य च ततो वहिः ॥ १५

यः शुचिः प्रयतो भूत्वा रुध्वा मातृकयापि च ।
संवेष्ट्य च धराबिम्बं कोणेषु श्रियमालिखेत् ॥ १६

श्रीसूक्तयन्त्रमेतत्तु धारयेद्यो यथाविधि ।
पुत्रारोग्यधराधान्यधनगोसस्यशालिनीम् ॥ १७

लब्ध्वा तु बहुलां लक्ष्मीं जीवेत्स शरदां शतम् ।
इदं यन्त्रं ताम्रपत्रे लिखित्वा च सुबुद्धिमान् ॥ १८

हुत्वाऽऽज्यैः सिक्तसंपातं संस्थाप्याङ्गणभूतले ।
परिवारयुतां लक्ष्मीं पूजयेत्पूर्वमार्गतः ॥ १९

चतुर्थ्यन्तेन सूक्तेन महालक्ष्मीं समर्चयेत् ।
सर्वानप्युपचारांश्च सूक्तेनैव तु कारयेत् ॥ २०

देवीं सावरणां पूज्य श्रीबलिं च विधाय तु ।
भूतलं च समीकृत्य स्थापयेत्कमलासन ॥ २१

एवमाचरतः पुंसो वर्धन्ते सर्वसम्पदः ।
पुत्रैः पौत्रैस्तथा दारैरिष्टैश्च विविधैर्धनैः ॥ २२

नागैरश्वैरसंख्याकैर्गोभिश्च वृषभैरपि ।
तस्मिन् गृहे महालक्ष्मीर्वसत्याभूतसंप्लवम् ॥ २३

भूतप्रेतपिशाचाद्यैर्महारोगैर्न बाध्यते ।
अपमृत्युश्च नैवास्ति तस्मिन् गेहे चतुर्मुख ॥ २४

सर्वैश्वर्यं गृहे तस्य नृत्यन्ति निधयः सदा ।
अचला श्रीमहालक्ष्मीर्वासं च कुरुते सदा ॥ २५

इति श्रीमहालक्ष्मीकल्पे नारायणब्रह्मोमामहेश्वर-
संवादे प्रत्यक्षसिद्धिप्रदे महालक्ष्मी -
रत्न (कल्प) कोशाख्ये
विंशोऽध्यायः ॥

## ॥ एकविंशोऽध्यायः ॥

सूक्तस्यैवं विधिःप्रोक्तः प्रत्येकं च वदाम्यहम् ।
प्रथमस्य ऋषिर्जातवेदानुष्टुप् प्रकीर्तितम् ॥ १

छन्दस्तु देवता लक्ष्मीः सर्वसौभाग्यदायिनी ।
हिरण्यवर्णां बीजं तु शक्तिरावह ईरिता ॥ २

हिरण्यवर्णां हरिणीं सुवर्णरजत स्रजाम् ।
चन्द्रां हिरण्मयीं लक्ष्मीं जात वेदैःश्च षडङ्गकम् (?) ॥ ३

ध्यानभेदं प्रवक्ष्यामि सर्वसौभाग्यसिद्धये ॥ ४

कन्यां काञ्चनसन्निभां हिमगिरिप्रख्यैश्चतुर्भिर्गजैः
हस्तक्षिप्तहिरण्मयामृतघटैरासिच्यमानां श्रियम् ।
नानारत्नसमुज्जवलां करलसत्पद्मां किरीटोज्ज्वलां
क्षौमाविद्धनितम्बबिम्बलसितां वन्देऽरविन्दस्थिताम् ॥ ५

एकलक्षं जपेन्मन्त्री दीक्षितो विजितेन्द्रियः ।
श्रियमभ्यर्चयेन्नित्यं सुगन्धिकुसुमादिभिः ॥ ६

तर्पणं तद्दशांशस्य जुहुयात्तद्दशांशकम् ।
ब्राह्मणान्भोजयेत्पश्चात् देवी सर्वार्थदा भवेत् ॥ ७

त्रिकोणं पञ्चकोणं च तथाष्टारमतः परम् ।
आदित्यपद्मं भूबिम्बमेवं चक्रं समालिखेत् ॥ ८

विन्दौ श्रीबीजमालिख्य भूविम्बान्तं मनुं लिखेत् ।
शातकुम्भमये पत्रे लिखित्वा यन्त्रमुत्तमम् ॥ ९

कण्ठेन बाहुमूलेन शिरसा निवहेत्सुधीः ।
पुत्रपौत्रादिभिः सार्धमैश्वर्यमतुलं भवेत् ॥ १०

धान्यं धनं तथा क्षेत्रं राज्यं पुत्रं च बान्धवम् ।
स्त्रियं मित्रं तथा सर्वं लभते यन्त्रधृक् पुमान् ॥ ११

कृतघ्नानां पशुघ्नानां दुष्कर्मनिरतात्मनाम् ।
दुःशीलानामकान्तानां लक्ष्मीविद्यां न दर्शयेत् ॥ १२

बलात्कारेण शौर्येण कपटानुनयेन वा ।
न गृह्णीयात् न गृह्णीयात् न गृह्णीयात्कदाचन ॥ १३

दुरात्मा यस्तु गृह्णाति पुस्तकान्मन्त्रमुत्तमम् ।
स चोरस्तु महालक्ष्म्या दह्यते स्वकुलेन तु ॥ १४

गोपयेत्सर्वयत्नेन मन्त्रराजं च पुस्तकम् ।
गोपनात्सर्वसिद्धिः स्यात् महालक्ष्मीः प्रसीदति ॥ १५

चतुर्मुख द्वितीयस्य ऋषिश्छन्दस्तु पूर्वकम् ।
श्रीर्देवता समाख्याता तां (म) बीजमिति स्मृतम् ॥ १६

हकारःशक्तिराख्याता योगः सर्वार्थसिद्धये ।
षडङ्गमाचरेत्तात् ऋचः षड्भागतः क्रमात् ॥ १७

केयूरैर्मेखलाद्यैर्नवमणिखचितैर्भूषणैर्भासमानां
कर्पूरामोदवक्त्रामपरिमितकृपापूर्णनेत्रारविन्दाम् ।
हेमाभां दिव्यवस्त्रां मृगमदतिलकां पद्मवक्त्रामुदारां
श्रीलक्ष्मीं पद्महस्तां [illegible] सर्वभूत्यै नमामि ॥ १८

एवं ध्यात्वा जपेन्मन्त्रं लक्षमानमतन्द्रितः ।
विन्दुत्रिकोणं षट्कोणं वसुकोणं कलादलम् ॥ १९

भूकोणं च लिखेन्मन्त्री विन्दावेकाक्षरं लिखेत् ।
कलादलान्तमेकैकं मूलवर्णं लिखेद्बुधः ॥ २०

भूकोणे मातृकां वेष्ट्य लक्ष्मीबीजेन संयुतम् ।
उपरागे समाराध्य आधारे सोमसूर्ययोः ॥ २१

तथा जपेदाग्रहणं महालक्ष्मीमनुस्मरन् ॥ २२

सर्वसौभाग्यदं यं (त्रं) वाहुमूले गलेऽथवा ।
धारयेत्तु महालक्ष्मीस्तत्रैव वसति ध्रुवम् ॥ २३

सहस्त्रक्रोशविस्तीर्णां सस्यजालैरलङ्कृताम् ।
महीमकण्टकां प्राप्य सर्वैश्वर्यं समश्नुते ॥ २४

आनन्दस्तु तृतीयस्य मन्त्रस्य ऋषिरीरितः ।
छन्दोऽनुष्टुप् परालक्ष्मीर्देवता भाग्यदायिनी ॥ २५

अकारं वीजमाख्यातं तकारं शक्तिरीरिता ।
षडङ्गमाचरेत्तात मन्त्रषट्कविभागतः ॥ २६

तटिद्वर्णां राकाशशितपनताटङ्कयुगलां
दरस्मेरां धीरां करकलितपद्मां द्विनयनाम् ।
वसानां क्षौमांशु दरविशदनाभीसरसिजां
भजामि त्वां देवीं प्रणतजनसौभाग्यजननीम् ॥ २७

षट्कोणं पूर्वमालिख्य तद्बहिर्वसुपत्रकम् ।
कलादलं ततः पश्चात् भूगृहं तद्बहिर्भवेत् ॥ २८

बिन्द्वारभ्य कलापत्रेष्वालिखेत्क्रमतो मनुः (म्) ।
संपूर्णं कमलाबीजैर्भूगृहे मातृकामपि ॥ २९

समृद्ध्यै बिल्वफलके लिखित्वा यन्त्रमुत्तमम् ।
समाराध्य महालक्ष्मीं सर्वावरणसंयुताम् ॥ ३०

श्रीसूक्तेनार्चयेल्लक्ष्मीं लक्ष्मीपुष्पेण पूजयेत् ।
षण्मासपूजनात्तात सर्वभाग्यमवाप्नुयात् ॥ ३१

एतद्यन्त्रं यस्य गेहे पूजितं यत्र वर्तते ।
तत्र सर्वसमृद्धिः स्यान्नात्रकार्या विचारणा ॥ ३२

एतां लक्षं जपेद्विद्यां पुरश्चरणमार्गतः ।
कर्पूरैर्हिमवार्यद्रैश्चन्दनैः कुसुमैरपि ॥ ३३

हुत्वा रत्नैर्गजैरश्वैः सर्वदा सेव्यते नरः ।
ऋषिश्च पूर्ववत्प्रोक्तश्छन्दस्तु बृहती भवेत् ॥ ३४

ककारं बिन्दुसंयुक्तं दीर्घस्वरविभूषितम् ।
बीजं शक्तिं श्रियं प्राहुर्योगः सर्वार्थसिद्धये ॥ ३५

षडङ्गमाचरेद्धीमान् मन्त्रषट्कविभागतः ॥ ३६

या सा पद्मासनस्था विपुलकटितटी पद्मपत्रायताक्षी
गम्भीरावर्तनाभिः स्तनभरनमिता शुभ्रवस्त्रोत्तरीया ।
लक्ष्मीर्दिव्यैर्गजेन्द्रैर्मणिगणखचितैः स्नापिता हेमकुम्भै-
र्नित्यं सा पद्महस्ता मम वसतु गृहे सर्वमाङ्गल्ययुक्ता ॥ ३७

एवं ध्यात्वा जपेन्मन्त्रं लक्षमात्रं चतुर्मुख ।
पूर्णेन्दुं पूर्वमालिख्य तद्बहिर्वह्निमण्डलम् ॥ ३८

अष्टकोणं वसुदलं त्रयोदशदलं ततः ।
भूबिम्बेन समायुक्तं मनुं तत्र क्रमाल्लिखेत् ॥ ३९

स्वर्णे वा रजते वापि भूर्जपत्रे विलिख्य तु ।
एतच्चक्रं तु बध्नीयात् वन्ध्यानां बहुपुत्रदम् ॥ ४०

सर्वैश्वर्यकरं नित्यं सर्वपापप्रणाशनम् ।
ग्रहंकोपप्रशमनं नित्यो(कृत्यो)पद्रवनाशनम् ॥ ४१

कांसोस्मितस्य मन्त्रस्य वक्ष्यामि कमलासन ।
आनन्दः पञ्चमस्यापि ऋषिस्त्रिष्टुप् प्रकीर्तितम् ॥ ४२

छन्दस्तु देवता लक्ष्मीः सर्वैश्वर्यप्रदायिनी ।
चकारं बिन्दुसंयुक्तं बीजं कमलसम्भव ॥ ४३

एकारं शक्तिराख्याता योगो दारिद्र्यनाशने ।
षडङ्गमाचरेन्मन्त्रषट्कवित्तत्रकारतः ॥ ४४

तेजोमण्डलमध्यगां द्विनयनां दिव्याम्बरालङ्कृतां
देवीं पद्मवराभयं करतलैश्चिन्तामणिं बिभ्रतीम् ।
नानारत्नविभूषणां च भजतां दौर्भाग्यसंहारिणीं
सर्वाभीष्टवरप्रदाननिरतां वन्दे परां देवताम् ॥ ४५

बिन्दुं शक्तिं ततः पश्चात् वसुकोणं ततः परम् ।
दशच्छदद्वयं पश्चात् मनुच्छदसमन्वितम् ॥ ४६

अष्टपत्रं कलापत्रं भूपुरद्वयसंयुतम् ।
एवं लिखित्वा श्रीचक्रं सर्वसिद्ध्येककारणम् ॥ ४७

एनां लक्षं जपेद्विद्वान् पुरश्चरणमार्गतः ।
पश्चाद्यन्त्रं समालिख्य बिन्दावेकाक्षरं लिखेत् ॥ ४८

त्रिकोणं तु समारभ्य मन्वश्रान्तं समालिखेत् ।
अष्टच्छदे कलापद्मे श्रीगायत्रीं समालिखेत् ॥ ४९

भूगृहे मातृकालक्ष्मीं समालिख्य विधानतः ।
अनेन चक्रराजेन सर्वकर्माणि साधयेत् ॥ ५०

इति श्रीमहालक्ष्मीकल्पे नारायणब्रह्मोमामहेश्वर-
संवादे प्रत्यक्षसिद्धिप्रदे महालक्ष्मी -
रत्न (कल्प) कोशाख्ये
एकविंशोऽध्यायः ॥

## ॥ द्वाविंशोऽध्यायः ॥

मन्त्रयोगं प्रवक्ष्यामि पञ्चमस्य महामते ।
सम्पत्प्रयोगं कुर्वीत साधकः सुसमाहितः ॥ १

ध्यात्वा हृत्पद्ममध्ये तु पीतवर्णां शुचिस्मिताम् ।
पद्मद्वयधरां चैव दधतीं मणिपात्रकम् ॥ २

लक्ष्मीबीजं समासाद्य पूर्वतः पुरतो मुनेः ।
शुचिर्जपेत्समासीनो लक्षान्पञ्च समाहितः ॥ ३

जपन्नष्टोत्तरशतं जलं मूर्ध्नि विनिक्षिपेत् ।
जपेच्च(?) जुहुयादग्नौ विल्वैराज्येन पङ्कजैः ॥ ४

अलक्ष्मीमात्मवंशस्थां व्यपोह्य सकलामपि ।
धनधान्यसमृद्धः स्यात् मासमात्रेण मन्त्रवित् ॥ ५

अन्नं सप्ताभिमन्त्र्यैवं नित्यं भुञ्जीत वाग्यतः ।
तस्मादन्नसमृद्धिः स्यात् अक्षया नात्रसंशयः ॥ ६

व्रीहिहोमाद्व्रीहिमान् स्याच्छालिमान् शालिहोमतः ।
तिलहोमात्तिलाढ्यःस्यात्पुष्पहोमाच्च वस्त्रवान् ॥ ७

उत्पलेनार्थसिद्धिःस्यात् पायसैः पशुमान् भवेत् ।
लाजैः कन्यामवाप्नोति पुष्टिमान् दधिहोमतः ॥ ८

येन येन च होमः स्यात्तत्तस्य तु सिध्यति ।
ऐन्द्रेण संपुटीकृत्य चतुर्लक्षं जपेत्सुधीः ॥ ९

ऐरावतगजारूढदेवेशेन सुसेविताम् ।
स्मरन् लक्ष्मीमवाप्नोति चक्रवर्तित्वमाप्नुयात् ॥ १०

धनेशं संपुटीकृत्य जपेल्लक्षत्रयं सुधीः ।
शङ्खपद्मनिधिभ्यां तु सेव्यो धनपतिर्भवेत् ॥ ११

जपेच्छङ्खनिधिं पद्मनिधिं चापि चतुर्थितः(?) ।
आदावन्ते पुटीकृत्य जपेल्लक्षत्रयं सुधीः ॥ १२

धनराशिमवाप्नोति धान्यराशिं च विन्दति ।
अर्थशव्दं समुद्धृत्य पतये नम इत्यपि ॥ १३

अनेन मन्त्रं संयोज्य सप्तलक्षं जपेच्छुचिः ।
धनधान्यसमृद्धिः स्यात् धनदेन समो भवेत् ॥ १४

श्रीपद्मपदमुद्धृत्य उद्भवाय नमः पदम् ।
अनेन मन्त्रं संयोज्य लक्षमेकं व्रती जपेत् ॥ १५

पीतवर्णां पद्महस्तां मुक्तामालाविभूषिताम् ।
देवीं ध्यात्वा जपेन्मन्त्री नित्यमेवायुतं शुचिः ॥ १६

वर्षेण स्याद्धनपतिस्तद्वत् ग्राममवाप्नुयात् ।
शुद्धवासपदं प्रोक्त्वा(?) से नमः पदमुद्धरेत् ॥ १७

कण्ठमात्रे जले स्थित्वा जपेत्तदयुतत्रयम् ।
जपं पूजां च कुर्वाणो धनदेन समो भवेत् ॥ १८

सम्पत्कामो भवेल्लक्षं केवलं चैकमन्त्रवित् ।
सम्पदं लभते सर्वां नात्रकार्या विचारणा ॥ १९

इति श्रीमहालक्ष्मीकल्पे नारायणब्रह्मोमामहेश्वर-
संवादे प्रत्यक्षसिद्धिप्रदे महालक्ष्मी -
रत्न (कल्प) कोशाख्ये
द्वाविंशोऽध्यायः ॥

## ॥ त्रयोविंशोऽध्यायः ॥

षष्ठस्य मन्त्रराजस्य ऋषिरानन्द ईरितः ।
तृष्टुप् छन्दस्तु देवेशी देवता श्रीःसमीरिता ॥ १

*आकारं बिन्दुसंयुक्तं दीर्घेणापि समन्वितम् ।
बीजं शक्तिस्तु लक्ष्मीश्च योगः सर्वार्थसिद्धये ॥ २

षडङ्गमाचरेद्विद्वान् मन्त्रषट्कविभागतः ॥ ३

श्रीमन्मण्टपमध्यचक्रविलसत्ताक्ष्यांससंस्थस्य मे
देवीं दक्षिणवक्षसि प्रणयिनीं पद्मं करे बिभ्रतीम् ।
कोटीराङ्गदहारनूपुरलसत्ताटङ्कनासामणीन्
कस्तूरीतिलकाञ्चितां शशिमुखीं वन्दे परां देवताम् ॥ ४

तदेव यन्त्रमेतस्याः श्रीबीजद्वयसंयुतम् ।
महाचक्रमिदं श्रेष्ठं सर्वचक्रोत्तमोत्तमम् ॥ ५

समस्तदेवसंसेव्यं दर्शनाद् भुक्तिमुक्तिदम् ।
धारणात्सर्वसिद्धिं च सर्वैश्वर्यं समश्नुते ॥ ६

पुरश्चर्यां लक्षमात्रं कृत्वा काम्यानि साधयेत् ।
सूक्तपञ्चकमन्त्रे तु यदुक्तं संपुटादिकम् ॥ ७

तत्सर्वं योजयेदस्मिन् मन्त्रे सर्वार्थसाधके ।
श्रृणु तात प्रवक्ष्यामि मन्त्रयोगं यथाचरेत् ॥ ८

---

* अत्र यथामातृकं लिखितम्

यन्त्रानेन विधानेन साधकेन प्रयुज्यते ।
तेनैव(?) नगरग्रामे जगत्क्षोभः प्रजायते ॥ ९

लक्षमात्रं जपेन्मन्त्रं मन्मथाकारमास्थितः ।
क्षोभयेदखिलं ब्रह्मन् जङ्गमं मन्त्रतत्ववित् ॥ १०

योषितां तु विशेषेण क्षोभणं जायते सदा ।
दर्शनात्साधकेन्द्रस्य प्रतापोत्तप्तमानसाः ॥ ११

मन्त्रसंमोहहृदयाः स्फुरज्जघनमण्डलाः ।
योषितो विवशास्तात जायन्ते नात्र संशयः ॥ १२

एवं लक्षत्रयं जप्त्वा व्रतस्थः साधकोत्तमः ।
संक्षोभयति मन्त्रेण त्रैलोक्यं सचराचरम् ॥ १३

लिखित्वा विमलं चक्रं तन्मध्ये प्रतिमां यदा ।
नाम्ना लिखति संयुक्तां ज्वलन्तीं चिन्तयेत्ततः ॥ १४

शतयोजनमात्रस्थाप्यदृष्टा पिहिता[1] भवेत् ।
भयलज्जाविनिर्मुक्ता साप्यायाति विमोहिता ॥ १५

तन्मध्यगोऽथवा भूत्वा मन्त्रं चिन्तयते सदा ।
सर्वमात्मात्मानमरणं साध्यमप्यरणीकृतम्(?) ॥ १६

वल्लभः सर्वलोकस्य जायते भाग्यसुन्दरः ।
सर्वरत्नोपहारैस्तु पूजयेन्मुद्रया युतम् ॥ १७

---

1. अदृष्टापि हि या भवेत् ।

यस्य नाम्नैव संयुक्त(?) स भवेद्दासवद्वशी ।
अदृष्टावास्तु संयोज्य नाम चक्रस्य मध्यगम् । १८

विरच्य योनिमुद्रां च तामाकर्षयति क्षणात् ।
यक्षिणीं वाथ गन्धर्वां किन्नरीं वा सुरेश्वरीम् ॥ १९

क्षोभयेदखिलां कन्यां मन्मथाकारमाश्रितः ।
रोचनाकुङ्कुमाभ्यां तु समभागं तु चन्दनम् ॥ २०

अष्टोत्तरशतं जप्त्वा तिलकं कारयेत्ततः ।
ईक्षते साधको यस्तु स्पृशते वाथ चिन्तयन्(?) ॥ २१

अर्धेनैव शरीरेण सोऽवश्यं याति दासवत् ।
शतं पुष्पं फलं गन्धं जप्त्वा यस्यां प्रदीयते ॥ २२

सद्य आकृष्यते सा तु विमूढहृदया सती ।
हठाकृष्टिरियं भद्र न क्वचित्प्रतिहन्यते ॥ २३

इति श्रीमहालक्ष्मीकल्पे नारायणब्रह्मोमामहेश्वर-
संवादे प्रत्यक्षसिद्धिप्रदे महालक्ष्मी -
रत्न (कल्प) कोशाख्ये
त्रयोविंशोऽध्यायः ॥

## ।। चतुर्विंशोऽध्यायः ।।

सप्तमस्य ऋषिर्देवसहः प्रोक्तः प्रजापते ।
प्रस्तारपङ्क्तिः छन्दःस्यादेवता श्रीरुदीरिता ॥ १

उकारं बीजमाख्यातं मकारं शक्तिरुच्यते ।
योगः सर्वार्थसिद्ध्यै स्यात् षडङ्गं पूर्वमुच्चरेत् ॥ २

हेमाभां पीतवस्त्रां कुचभरनमितां मध्यदेशे कृशाङ्गीं
संफुल्लाम्भोजयुग्मां करकमलयुगं धारयन्तीमभीतिम् ।
मुक्ताहारामुदारां मणिमयमकुटां शोभमानां च पद्मां
भक्ताभीष्टार्थदानप्रथितगुणगणां नौम्यहं विश्वभूत्यै ॥ ३

एवं ध्यात्वा महालक्ष्मीं जपेन्मन्त्रं दृढव्रतः ।
पूर्ववत्तर्पणादीनि कृत्वा काम्यानि साधयेत् ॥ ४

पञ्चविंशतिकोष्ठानि लिखेद्वाह्ये तु भूपुरम् ।
भूपुरे सप्तवर्णं च शिष्टकोष्ठेषु संलिखेत् ॥ ५

विलिखेद्विल्वफलके मातृकाबीजसंयुतम् ।
सहस्रं प्रजपेत्स्पृष्ट्वा स्थापयेदङ्गणे सुधीः ॥ ६

सर्वसौभाग्यमाश्रित्य पुत्रपौत्रैस्तु मोदते ।
पुष्ययुक्तचतुर्दश्यां मध्याह्ने श्रियमर्चयेत् ॥ ७

रक्तपुष्पाणि मन्त्रेण बिल्वपीठे विनिक्षिपेत् ।
सहस्रं प्रजपेत् धीमान् समायाति स्वयं नृपः ॥ ८

द्विक्रोशात् द्विसहस्रेण त्रिक्रोशात् त्रिसहस्रतः ।
चतुःसहस्रतः क्रोशादागच्छेन्नात्रसंशयः ॥ ९

जानुदघ्ने जले स्थित्वा नेत्रे संमील्य निश्चलः ।
रात्रावाकर्षयेत् संयक् सहस्रावर्तनेन च ॥ १०

द्विसहस्रादूरुदघ्ने त्रिगुणान्नाभिदघ्नतः ।
चतुर्गुणादुरोदघ्ने कण्ठमात्रेऽयुतान्नरः ॥ ११

स्त्रियः सर्वाः समासाद्य क्षुभ्यन्ति स्मरतापिताः ।
क्षुत्पिपासा इति ऋचः ऋषिर्देवेश्वरः स्मृतः ॥ १२

छन्दोऽनुष्टुप् महालक्ष्मीर्देवता श्रीःसमीरिता ।
क्षुं बीजं शक्तिराख्याता हकारं चतुरानन ॥ १३

शेषं पूर्ववदाख्यातं एष दारिद्र्यनाशकृत् ।
ध्यायेद्देवीं महालक्ष्मीं दारिद्र्योच्चाटकारिणीम् ॥ १४

पङ्कजासनमध्ये तु सुखासीनां शुचिस्मिताम् ।
हेमाम्बरधरां हेमपद्मपीठोपरि स्थिताम् ॥ १५

मुक्तामाणिक्यवैडूर्योपेतक्वणितनूपुराम् ।
रत्नबन्धस्रजां चैव रत्नकुण्डलमण्डिताम् ॥ १६

विचित्ररत्नवद्भूषां विचित्रावयवैर्युताम् ।
पद्मद्वयधरां चैव वरदाभयधारिणीम् ॥ १७

चामराभ्यां वीज्यमानां सितछत्रोपशोभिताम् ।
शङ्खपद्मनिधिभ्यां च सेवितां पादमूलताः (तः) ॥ १८

ज्येष्ठाप्रहरणरतां असमृद्धिविनाशिनीम् ।
अभूतिहरणां देवीं ध्यायेत्सम्पत्प्रदायिनीम् ॥ १९

लक्षं जपेन्महामन्त्रं सर्वसिध्येककारणम् ।
हुत्वा पद्मं त्रिमध्वक्तमलक्ष्मीं नाशयेद् व्रती ॥ २०

क्षुधं प्रशमयेदन्नाद् पिपासां क्षीरहोमतः ।
तिलैर्मलं हरेद्धीमान् ज्येष्ठां वर्ण्येन नाशयेत् ॥ २१

अभूतिं बिल्वपत्रैश्च तत्फलं त्वसमृद्धिहृत् ।
एतद्गुह्यतमं प्रोक्तं हुनेत्कार्यानुरूपतः ॥ २२

चन्द्रं [1]पवनदिक्कोणे वसुपद्मं ततौ लिखेत् ।
तद्बहिर्दशपत्रं स्यात् भूपुरद्वयसंयुतम् ॥ २३

विन्दौ लक्ष्मीं समालिख्य लिखेन्मूलं यथाक्रमम् ।
भूपुरे मातृकां चापि मूलमन्त्रं श्रियं लिखेत् ॥ २४

यन्त्रस्य धारणात्तात वर्धन्ते सर्वसम्पदः ।
अलक्ष्मीं नाशयेदाशु पूर्वोक्तान्यशुभानि च ॥ २५

आयुष्कामो जपेल्लक्षं मन्त्रमेकाग्रमानसः ।
दूर्वया चाहुतिं हुत्वा पुरुषायुरवाप्नुयात् ॥ २६

जप्त्वा लक्षत्रयं विद्यां पूर्णकामोऽचिराद्भवेत् ।
गलूचिभिस्तु जुहुयादयुतं मृत्युनाशनम् ॥ २७

---

1. षट्कोणाष्टकोणद्वयम्

ब्राह्मे मुहूर्ते चोत्थाय वाग्यतो नियतःशुचिः ।
त्रिसहस्रं जपेन्नित्यं त्रिशतायुष्यवर्धनम् ॥ २८

आरोग्यकामस्तु जपेदुद्बाहुः सूर्यदृक् पुमान् ।
हस्तेऽर्कवारे सप्तम्यां प्रीतिकामोऽयुतत्रयम् ॥ २९

क्षयकुष्ठज्वरादीनां रोगाणां नाशनं भवेत् ।
भस्माभिमन्त्र्य मन्त्रेण ककारेण समन्वितम् ॥ ३०

त्रिसहस्रं च तद्भस्म निक्षिपेद्रोगिमूर्धनि ।
आरोग्यं भवति क्षिप्रं सर्वरोगैर्न बाध्यते ॥ ३१

रोगिमूर्ध्नि विसंचिन्त्य रेफं रन्ध्रस्य मध्यतः ।
देवीमन्त्रमनुस्मृत्य तं ज्योतिर्व्याप्तदेहकम् ॥ ३२

ध्यात्वा रोगिणमालंब्य सहस्रं प्रजपेन्मनुम् ।
सर्वे रोगाश्च नश्यन्ति विषाण्युपविषाणि च ॥ ३३

इति श्रीमहालक्ष्मीकल्पे नारायणब्रह्मोमामहेश्वर-
संवादे प्रत्यक्षसिद्धिप्रदे महालक्ष्मी -
रत्न (कल्प) कोशाख्ये
चतुर्विंशोऽध्यायः ॥

## ॥ पञ्चविंशोऽध्यायः ॥

गन्धद्वारेति मन्त्रस्य देवेशो ऋषिरीरितः ।
छन्दोऽनुष्टुप् महालक्ष्मीर्देवता परिकीर्तिता ॥ १

गकारं बीजमाख्यातं माया शक्तिः समीरिता ।
शेषं सर्वं पूर्ववत्स्यात् ध्यानभेदं वदाम्यहम् ॥ २

कल्पद्रोः पादमूले द्रुतकनकनिभां चारुसिंहासनस्थां
हस्तैः पद्मे दधानामभयवरकरां धारयन्तीं च मालाम् ॥
नानाभूषां सुवेषां मणिमकुटधरां दिव्यगन्धानुलेपां
ध्यायेत्संपूर्णकामप्रदकरकमलां कंबुकण्ठीं हृदब्जे ॥ ३

एवं ध्यात्वा जपेन्मन्त्रं लक्षं सर्वार्थसिद्धये ।
तिर्यक् पञ्च लिखेद्रेखामूर्ध्वं च नव रेखकम् ॥ ४

गन्धद्वारेति मन्त्रं तु लिखेन्मन्त्री यथाक्रमम् ।
यन्त्रमेतन्महावीर्यं सर्ववश्यकरं परम् ॥ ५

तालपत्रे समालिख्य स्वेष्टद्वारोपरि न्यसेत् ।
योषिद्वा पुरुषो वापि तत्क्षणात्स्ववशं व्रजेत् ॥ ६

[1]क्षोभिणीं विधिवत्कृत्वा साधयेत्कर्म वाञ्छितम् ।
हस्तौ संयोज्य तर्जन्यौ प्रसार्य सुसमाहितः ॥ ७

---



1. क्षोभिणीमुद्राम्

अङ्गुष्ठमध्यमायुक्तौ कुर्यात्संक्षोभिणी मता ।
कनिष्ठमध्यमापीड्य अङ्गुष्ठौ तु प्रसारयेत् ॥ ८

प्रसार्य तर्जनीं सा तु मोहिनीति प्रकीर्तिता ।
क्षोभिणीं सर्ववश्ये तु राजवश्ये तु मोहिनीम् ॥ ९

द्राविणीं पुरुषवश्ये च योनिमुद्रां तु योषिताम् ।
क्षोभिणीं विधिवत्कृत्वा ध्यात्वा लक्ष्मीं विचक्षणः ॥ १०

अयुतं प्रजपेन्मन्त्री सर्वलोको वशे भवेत् ।
तथाऽयुतेन पुरुषान् द्राविण्या वशयेत्सुरान् ॥ ११

योन्याऽयुतेन वशयेत्तथा सर्वाः सुरस्त्रियः ।
यक्षी विद्याधरी नागीगन्धर्वाः सिद्धयोषितः ॥ १२

मानुषी च तथा ऽन्याश्च कुर्युर्दास्यं सदा स्त्रियः ।
एकारं पुरुषं वश्ये ओंकारं राज वश्यके ॥ १३

स्त्रीवश्ये तु तथेङ्कारं मन्त्रस्यादौ प्रयोजयेत् ।
वध्वा तुं त् मोहिनीमुद्रां ध्यात्वा देवीं शुचिस्मिताम् ॥ १४

जप्त्वा तु मनसा मन्त्रं अर्थसिद्धिं च विन्दति ।
धनधान्यमवाप्नोति नित्यमेव न संशयः ॥ १५

द्राविणीमर्थकामस्तु दर्शयेच्च जपन्मनुम् ।
धनधान्यमवाप्नोति भवेद्वैश्रवणोपमः ॥ १६

पञ्चविंशति(?) जप्त्वैनं यं नित्यमभिषेचयेत् ।
स सौभाग्ययुतो भूत्वा स्त्रीषु वल्लभतां व्रजेत् ॥ १७

पञ्चविंशतिभिर्जप्त्वा पयः पिबति नित्यशः ।
स मेधावी भवेद्वाग्मी षण्मासाच्छ्रुतधारकः ॥ १८

पानभोजनताम्बूलगन्धमाल्यादिकं च यत् ।
अनेनैव प्रयुञ्जीत तत्सर्वं वशमानयेत् ॥ १९

शतं जपन्स्पृशन्नारीं पुमांसं वशमानयेत् ।
स्मरेन्मन्त्रमिदं नित्यं स्त्रीषु राजकुलेषु च ॥ २०

व्यवहारे वने द्यूते मृगदावभयं भवेत् ।
कृकलासवसासाध्यपादपांसुकुलालमृत् ॥ २१

तेन प्रतिकृतिं कृत्वा पञ्चविंशतिमन्त्रितम् ।
स्वमूत्रदेशे निखनेत्समुद्दिश्य वशी भवेत् ॥ २२

शान्ति(?) पिष्टप्रतिकृतिं शतं जप्त्वा रवेर्दिने ।
ध्यात्वाभि[1]लषयेन्मंत्री मरणान्तं वशो[2] भवेत्(?) ॥ २३

धनं ददाति सकलं नरं स्त्री रमते स्वयम् ।
स्त्रीणां मैथुनमारूढो य इदं जपते सदा ॥ २४

सा नेच्छत्यन्यपुरुषं स्वयंग्राहं करोति च ।
न निद्रां लभते मूर्छां गच्छन्ती स्वधनप्रदा ॥ २५

विरहे मरणं याति तत्क्षणान्नात्रसंशयः ।
संजापी नगरं ग्रामं स्त्रियं वा वरवर्णिनीम् ॥ २६

1. अभिलषितं ध्यात्वा मन्त्रं जपेत् 2. वशे

इन्द्रं वा वशयेल्लक्षजपेन कमलासन ।
अश्वत्थसमिधा विप्रान् पङ्कजैस्तु नृपांस्तथा ॥ २७

वैश्यं तु तिलतैलेन शूद्रं तु लवणेन च ।
स्त्रियं च लवणेनैव पलाशेन नृपस्त्रियः ॥ २८

गन्धमष्टोत्तरशतं गन्धद्वारेतिमन्त्रतः ।
मन्त्रं लिख्य ततोऽङ्गेषु लेपयेत्सर्ववश्यकृत् ॥ २९

इति श्रीमहालक्ष्मीकल्पे नारायणब्रह्मोमामहेश्वर-
संवादे प्रत्यक्षसिद्धिप्रदे महालक्ष्मी -
रत्न (कल्प) कोशाख्ये
पञ्चविंशोऽध्यायः ॥

## ॥ षड्विंशोऽध्यायः ॥

दशमस्य ऋषिः कामः छन्दोऽनुष्टुप् प्रकीर्तितम् ।
मकारं बीजमाख्यातं शंकारं शक्तिरुच्यते ॥ १

शेषं पूर्ववदाख्यातं ध्यानभेदं वदाम्यहम् । २

कान्त्या काञ्चनसन्निभां त्रिणयनां कल्हारमालावतीं
कस्तूरीतिलकां करैश्च कमले कण्ठेन मुक्तावलिम् ।
शेषाशेषविशेषभीषणरते संबिभ्रतीं कुण्डले
पद्माक्षीं भज सर्वदाभिलषितप्राप्त्यै समृध्यै श्रियै ॥ ३

एवं ध्यात्वा जपेन्मन्त्रं लक्षमात्रमतन्द्रितः ।
ततो भवति हे तात साधकः सर्वमोहनः ॥ ४

रागिणां वनितानां च साधको मदनाधिकः ।
तद्दृष्टिपथगा नारी सुरी वाप्यथवाऽसुरी ॥ ५

विद्याधरी किन्नरी वा यक्षी नागाङ्गनापि वा ।
प्रचण्डतरभूपालकन्यका सिद्धकन्यका ॥ ६

ज्वलन्मादनदुष्प्रेक्षज्ज्वलनात्तप्तमानसा ।
खिन्ना प्रचलितापाङ्गा विमूढा मदविह्वला ॥ ७

निवेदितात्मसर्वस्वा वशगा जायते जवात् ।
चलज्जलेन्दुसदृशा बालार्ककिरणारुणा ॥ ८

चिन्तितां योषितं योनौ संक्षोभयति तत्क्षणात् ।

सैव सिन्दूरवर्णाभा हृदये चिन्तिता सती ॥ ९

संमोहान्मदनाविष्टचित्ताकर्षकरी स्मृता ।
एतस्याः सदृशं किञ्चिन्नास्त्येव भुवनत्रये ॥ १०

संस्मृता पापहरिणी जप्ता मृत्युविनाशिनी ।
पूजिता दुःखदौर्भाग्यव्याधिदारिद्र्यनाशिनी ॥ ११

हुता विघ्नौघशमनी ध्यानात्सर्वार्तिनाशिनी ।
अरुणं मोहने प्रोक्तं धवलं वाक्प्रसिद्धये ॥ १२

वाक्सिद्धियोगं वक्ष्यामि सर्वेषां वाक्प्रवर्तकम् ।
धवलाम्बरसंवीतो धवलावासमध्यगः ॥ १३

पूजयेद्धवलैः पुष्पैः ब्रह्मचर्यरतो नरः ।
धवलैरेव नैवेद्यैर्दधिक्षीरोदकादिभिः ॥ १४

सङ्कल्पधवलैर्वापि वागैश्वर्यफलप्रदाम् ।
संपूज्य कमलां लक्ष्मीं ध्यायेद्वागीश्वराकृतिम् ॥ १५

नियुतं प्रजपेन्मन्त्रं वागैश्वर्यं प्रवर्तते ।
शिवेति यत्पदंस्पष्टमक्षरं वक्तुमक्षमः ॥ १६

जडो मूढोऽथ दुर्मेधा गतप्रज्ञोऽपि नष्टधीः ।
सोऽपि सञ्जायते वाग्मी वाचस्पतिरिवापरः ॥ १७

सत्पण्डितपटाटोपजेताऽप्रतिहतप्रभः ।
सतर्कपदवाक्यार्थशव्दालङ्कारसारवित् ॥ १८

पादाहतसहस्त्रोर्मिमालातुल्यैरुपन्यसेत् ।
सुकुमारतरस्वारैः कीर्त्यलङ्कारपूर्वकैः ॥ १९

परगुह्यमहावाक्यकर्ता सद्गुरु जायते ।
वेदवेदाङ्गवेदान्तसिद्धान्तज्ञानपारगः ॥ २०

ज्योतिःशास्त्रेतिहासादिर्मीमांसास्मृतिवाक्यवित् ।
पुराणरसवादादिनिपुणोऽनेकतन्त्रवित् ॥ २१

विचित्रच्चित्रकर्मादिशिल्पनैकविचक्षणः ।
महाव्याकरणोदारशब्दसंस्कृतवाक् कविः ॥ २२

सर्वभाषापरिज्ञानी समस्तलिपिकर्मकृत् ।
नानाशास्त्रार्थशिक्षादिवेत्ता भुवनविश्रुतः ॥ २३

सर्ववेदार्थवेत्ता च सर्वज्ञः साधको भवेत् ।
एवंविधायै संसिद्ध्यै लक्षमात्रं जपेद्बुधः ॥ २४

वाग्[illegible] कामबीजं च पराख्यं कमलामपि
एतदृचा च संयोज्य जपेत्सर्वार्थसिद्धये ॥ २५

तिर्यग्रेखाः षडुल्लिख्य ऊर्ध्वमष्ट लिखेद्बुधः ।
बीजैर्मूलं च कोष्ठेषु लिखेन्मन्त्री यथाक्रमम् ॥ २६

धारणाद्वाक्पतिर्भूयात् धनधान्यसमृद्धिमान् ।
सर्वैः श्रीसूक्तमन्त्रैस्तु भवेयुः सर्वसम्पदः ॥ २७

गोप्याद्गोप्यतरं ब्रह्मन् न दद्याद्यस्य कस्यचित् ।
गोपनीयं प्रयत्नेन श्रीसूक्तं कमलासन ॥ २८

इति श्रीमहालक्ष्मीकल्पे नारायणब्रह्मोमामहेश्वर-
संवादे प्रत्यक्षसिद्धिप्रदे महालक्ष्मी -
रत्न (कल्प) कोशाख्ये
षड्विंशोऽध्यायः ॥

## ॥ सप्तविंशोऽध्यायः ॥

कर्दमेनेति मन्त्रस्य ऋषिः कर्दम ईरितः ।
छन्दः पूर्ववदाख्यातं ककारं बीजमुच्यते ॥ १

नकारं शक्तिराख्याता शेषं पूर्ववदाचरेत् ।
ध्यायेद्धाटकसन्निभां द्विनयनां दिव्याम्बरालङ्कृतां । २
संफुल्लारुणपद्मकोशयुगलश्रीमत्कराम्भोरुहाम् ।
नानारत्नकिरीटकुण्डललसद्वक्त्राम्बुजां पद्मिनीं
सर्वाभीषृफलप्रदाननिरतां सम्पत्समृद्ध्यै सदा ॥ ३

एवं ध्यात्वा जपेल्लक्षं महाकल्पयुतां जपेत् ।
बिन्दुवस्वरमालिख्य वस्वस्रं च ततः परम् ॥ ४

कलादलं ततः पश्चात् भूगृहद्वन्द्वसंयुतम् ।
बिन्दौ श्रीबीजमालिख्य कलान्तं मन्त्रलेखनम् ॥ ५

पूर्णं च कमलाबीजैर्भूपुरे मातृकामपि ।
एतद्यन्त्रं महासिद्धिदायकं सर्वसिद्धिदम् ॥ ६

पुत्रपौत्राभिवृद्धिः स्यात् स्थापनात्सर्वसंपदः ।
आपः सृजन्तु मन्त्रस्य चिक्लीतो भगवानृषिः ॥ ७

छन्दोऽनुष्टुप् तथा बीजं मा शक्तिस्तु लकारकम् ।
शेषं पूर्ववदाख्यातं ध्यानं किञ्चित् प्रवच्मि ते ॥ ८

ध्यायेत्कल्पतरोर्मूले रत्नसिंहासनस्थिताम् ।
पद्मद्वयधरां पद्मां वरदाभयधारिणीम् ॥ ९

सर्वरत्नविचित्राङ्गीं रत्नश्रीपादपीठिकाम् ।
हेमदण्डसितच्छत्रचामरद्वयवीजिताम् ॥ १०

रत्नौघैरभिषिञ्चन्तीं भक्तं गजकरोद्धृतैः ।
एवं ध्यात्वा जपेल्लक्षं भवेद्धनपतिः स्वयम् ॥ ११

बिन्दुं भूद्वन्द्वमालिख्य नागकोणतदब्जकम् ।
रसकोणं ततो लिख्य रसान्तक्रमतो मनुम् ॥ १२

एतत्तारेण संवेष्ट्य धारयेदसमृद्धिनुत् ।
एतस्मात्कमलायन्त्रादसमृद्धिर्गमिष्यति ॥ १३

ज्येष्ठा च नाशमायाति नीहार इव भास्करात् ॥
आर्द्रामिति द्वयस्यापि जातवेदा ऋषिः स्मृतः । १४

छन्दोऽनुष्टुप् महालक्ष्मीर्देवता श्रीः समीरिता ।
आकारं बीजमाख्यातं शक्तिरावह उच्यते ॥ १५

शेषं पूर्ववदाख्यातं संख्यालक्षं जपेन्मनुम् ।
पिपासानाशनं बुद्धिदायकं प्रथमं स्मृतम् ॥ १६

अभूतिमसमृद्धिं च द्वितीयेन विनाशयेत् ।
द्वात्रिंशत्कोष्ठके यन्त्रे लिखेन्मन्त्रं यथाक्रमम् ॥ १७

लिखित्वा बिल्वफलके साध्यनामसमन्वितम् ।
तत्र देवीं समावाह्य पूजयेत्परदेवताम् ॥ १८

सर्वसिद्धिं समाश्रित्य धनं धान्यं च विन्दति ।
तां म आवह मन्त्रस्य ऋष्यादिः पूर्ववद्भवेत् ॥ १९

तां बीजं शक्तिराख्याता हकारं कमलासन ।
पद्मं मणिमयं कुम्भमिक्षुचापं च बिभ्रतीम् ॥ २०

पुष्पवाणां महालक्ष्मीं ध्यायेद्राज्यप्रदायिनीम् ॥
एवं ध्यात्वा जपेल्लक्षं राज्यलक्ष्मीं समश्नुते ॥ २१

विन्दुमत्षड्दलं लिख्य वस्वरं वसुपत्रकम् ।
कलादलं समालिख्य बिन्दावेकाक्षरं लिखेत् ॥ २२

कलान्तं मूलमालिख्य द्वात्रिंशे मातृकां लिखेत् ।
चतुः षष्टिदले चिन्तामणिं संलिख्य भूपुरे ॥ २३

श्रींबीजं सर्वतः पूर्णं कारयेद्यन्त्रतत्ववित् ।
एवमेतन्महायन्त्रं भुक्तिमुक्तिफलप्रदम् ॥ २४

धारणादस्य यन्त्रस्य सर्वसम्पत्समृद्धिमान् ॥
वल्लभः सर्वलोकानां जायते साधकोत्तमः ॥ २५

ऋचां पद्मप्रियादीनां अंगिरा ऋषिरीरितः ।
छन्दोऽनुष्टुप् वीजमाद्यं शक्तिरन्त्यं समुद्धरेत् ॥ २६

शेषं पूर्ववदाख्यातं संख्या लक्षत्रयं भवेत् ।
द्वात्रिंशकोष्ठके यन्त्रे एतन्मन्त्रं विलिख्य तु ॥ २७

धारयेत्पुत्रपौत्राद्यैः समृद्धो जायतेऽचिरात् ।
महायन्त्रं प्रवक्ष्यमि महालक्ष्म्या विशेषतः ॥ २८

पूर्णेन्दौ श्रियमालिख्य त्रिकोणे त्रयवर्णकम् ।
पञ्चकोणे पञ्चवर्णं वस्वरं वसुवर्णकम् ॥ २९

चत्वादित्यकलापत्रेष्वालिखेत्सूक्तधर्मतः ।
चतुर्विंशद्दले तात सर्वसौभाग्यदायिनीम् ॥ ३०

श्रीगायत्रीमन्तराले द्वात्रिंशे कादिसान्तकम् ॥
भूपुरे विलिखेद् बीजं समग्रं कमलासन ॥ ३१

हैमे वा राजते ताम्रे श्रीसूक्तं भूर्जपत्रके ।
पूर्ववत्स्थापयेद् विद्वान् सर्वसौभाग्यदं नृणाम् ॥ ३२

सर्वलोकवशीकारं सर्वाकर्षकरं परम् ।
सर्वपापक्षयकरं सर्वोपद्रवनाशनम् ॥ ३३

सर्वरोगहरं श्रेष्ठं सर्वशत्रुविनाशनम् ।
सर्वभूतप्रशमनं सर्वविघ्ननिवारणम् ॥ ३४

सर्वमृत्युप्रशमनं सर्वाभीष्टार्थसिद्धिदम् ।
धर्मार्थकाममोक्षाणां साधनं भाग्यकारणम् ॥ ३५

श्रीसूक्तस्य तु माहात्म्यं मया वक्तुं न शक्यते ।
यदि भूपांसवो लोके गण्यन्ते वर्षविन्दवः ॥ ३६

तथापि श्रीमहालक्ष्म्या वैभवं सूक्तवैभवम् ।
गोप्याद्गोप्यतरं सूक्तं पुस्तकं न प्रकाशयेत् ॥ ३७

श्रीसूक्तवर्णमेकैकं सर्वाभीष्टं प्रयच्छति ।
श्रीसूक्तेन तु मन्त्रेण किं वा लोके न सिध्यति ॥ ३८

श्रीसूक्तं गुरुणा दत्तमभिषेकपुरः सरम् ।
दीक्षापुरस्सरं शिष्यो गृह्णीयात्समनुत्तमम् ॥ ३९

पश्चादेतेन काम्यानि सावयेद्गुरुशासनात् ।
गुरुभ्यो यावदभ्यस्तं तावदेव विलोकयेत् ॥ ४०

एकं वर्णं पुस्तकस्थं सिद्धये नावलोकयेत् ।
आमपात्रे यथा न्यस्तं पयोदधिघृतादिकम् ॥ ४१

तस्य पात्रस्य दौर्बल्यात् सह पात्रेण नश्यति ।
तस्माद्गुरुमुखाल्लब्ध्वा श्रीसूक्तं षोडशार्णकम् ॥ ४२

प्रजपेत्सर्वसिध्यर्थं मोक्षमुद्दिश्य मन्त्रवित् ।
सर्वान् कामान् समाश्रित्य मद्वल्लोके महीयते ॥ ४३

इति श्रीमहालक्ष्मीकल्पे नारायणब्रह्मोमामहेश्वर-
संवादे प्रत्यक्षसिद्धिप्रदे महालक्ष्मी -
रत्न (कल्प) कोशाख्ये
सप्तविंशोऽध्यायः ॥

## ॥ अष्टाविंशोऽध्यायः ॥

नमस्ते देवदेवेश नमस्ते सर्वकामद ।
नमो विद्यास्वरूपाय नमः शान्तात्ममूर्तये ॥

सर्वसिद्धिप्रदे सूक्ते अभिषेकं(:) प्रकीर्तितम्(:) ।
तत्कर्म वद देवेश सर्वाभीष्टफलप्रदम् ॥

कृत्वा यत्पुरुषो लोके दीर्घमायुरवाप्नुयात् ।
ग्रहकोपादिशमनमपमृत्युविनाशनम् ॥

भूतग्रहमहाव्याधिकृत्योपद्रवनाशनम् ।
सर्वकामप्रदं देव वद राज्यप्रदायकम् ॥

श्रीनारायणः-

अभिषेकं प्रवक्ष्यामि समाहितमनाः शृणु ।
कृतेन येन पुरुषः प्राप्नुयात्सर्वसम्पदम् ॥

पूर्वं तु मण्टपं कृत्वा चतुःस्तम्भविराजितम् ।
पताकाध्वजसंछन्नं वितानविततं शुभम् ॥

चतुर्द्वारसमायुक्तं दर्भमालाविभूषितम् ॥
संवृतं कदलीपूगैरिक्षवैश्चापि मण्डितम् ॥

सुगन्धिकुसुमाकीर्णं चन्दनाम्भः समुक्षितम् ॥
अश्वत्थोदुम्बरप्लक्षन्यग्रोधैस्तोरणैः शुभैः ।

पूर्वादितः समायुक्तं द्वारं कुम्भोपशोभितम् ।
चतुर्हस्तान्तमायामं चतुरश्रं समस्थलम् ॥ ९

एवं तु मण्डपं कृत्वा तन्मध्ये चतुरानन ।
महावेदिं प्रकुर्वीत सर्वत्र च समन्विताम् ॥ (?) १०

दशभारेण शालीनां वितत्य परितस्ततः ।
सूक्ष्मवस्त्रेणचाच्छाद्य समन्तात्तस्य चोपरि ॥ ११

तदर्धं तण्डुलैः शुद्धैः परिस्तीर्य समन्ततः ।
आच्छाद्य सूक्ष्मवस्त्रेण परिस्तीर्य तिलैरपि ॥ १२

श्रीचक्रं तत्र विलिखेत्पूर्ववत्कमलोद्भव ।
हेमादिरचिताः कुम्भाः धूपगन्धाधिवासिताः । १३

अलङ्कृता घटाः सौम्या निश्छिद्राः कांस्यनादिनः ।
मन्त्राभिषेके कथिताः सर्वसिद्धिप्रदायकाः ॥ १४

*षोडशं कलशं बिन्दौ स्थापयेच्चतुरानन ।
घटत्रयं त्रिकोणेषु वसुकोणेऽष्टकुम्भकम् ॥ १५

दशयुग्मे तु तद्वत्स्यात् मन्वश्रेऽष्टघटं तथा ।
तावत्संख्यान्नागदले षोडशे षोडशें घटम् ॥ १६

चतुरस्त्रत्रये विद्वन् दशकुम्भाः प्रकीर्तिताः ।
स्थापयेन्मन्त्रविद्बाह्ये शतं पञ्चदशं भवेत् ॥ १७

---

* अत्र उत्तरत्र "षोडशें षोडशं घटमि"त्यत्र च षोडश-सङ्ख्याकान् घटानिति वक्तव्यतया ग्राह्यम् ॥

तद्वाह्ये दमकादीना जयादीनां वसु स्मृतम् ।
चिच्छक्त्यालिङ्गितस्यैकं चतुर्विंशच्छतं भवेत् ॥ १८

शुद्धविद्यां समारभ्य प्राप्याम्नायं तु पञ्च च ।
संहारमार्गमन्त्रांश्च लब्ध्वा गुरुमुखात्ततः ॥ १९

गुरुमूर्तिं समारभ्य लक्ष्मीपर्यन्ततः क्रमात् ।
दीक्षां प्राप्य सुरश्रेष्ठ विद्यादीक्षां ततश्चरेत् ॥ २०

चतुर्विंशत्युत्तरेण शतं दीक्षा प्रकीर्तिता ।
विद्यासंपुटदीक्षा तु शतं द्वादशं चाष्ट च ॥ २१

मध्यकुम्भे महालक्ष्मीं सर्वाभरणभूषिताम् ।
तार्क्ष्यरूढहरेर्वक्षःस्थलालयमहाश्रियम् ॥ २२

ध्यात्वा मन्त्री घटादीनामलङ्कारं प्रकल्पयेत् ।
चन्दनालिप्तसर्वाङ्गान् कूर्चाक्षतसमन्वितान् ॥ २३

दुकूलवेष्टितानेतान् पूरयेत्तीर्थवारिणा ।
मुक्तामणिक्यवैडूर्यगोमेधान् वज्रविद्रुमौ ॥ २४

पुष्यरागं मरतकं नीलं चेति यथाक्रमम् ॥
उक्तानि नव रत्नानि तेषु कुम्भेषु निक्षिपेत् ॥ २५

नवरत्नसमाबद्धं कषकांचनकल्पितम् ।
मध्यकुम्भे क्षिपेत्पद्मं यन्त्रास्यं देशिकोत्तमः ॥ २६

चन्दनोशीरकर्पूरजातीतक्कोलकुंकुमम् ।
कोष्ठागरुहमालैर्वायुतसंपुष्पभागात्(?) २७

विलोड्य सर्वकुम्भेषु मूलमन्त्रं समुच्चरन् ।
लक्ष्मीं दूर्वां सदाभद्रां सहदेवीं मधुव्रताम् । २८

समूलीं चक्रवल्लीं च कान्तापामार्गपद्मकम् ।
प्रियङ्गुमुद्गगोधूमव्रीहींश्च सलिलान् यवान् ॥ २९

शालितण्डुलमाषांश्च प्रक्षाल्यैतेषु निक्षिपेत् ॥
धात्रीलिकुचबिल्वानां कदलीनालिकेरयोः । ३०

फलानि च विनिक्षिप्य पुष्पाण्येतानि विन्यसेत् ।
पद्मं सौगन्धिकं जातीमल्लिकां वकुलं तथा ॥ ३१

चम्पकाशोकपुन्नागतुलसीकेतकोद्भवैः ।
पल्लवानि वटाश्वत्थप्लक्षोदुम्बरशाखिनाम् ॥ ३२

ब्रह्मकूर्चं च निक्षिप्य चषकैः सफलाक्षतैः ।
पिधाय कुम्भवक्त्राणि क्षौमैराच्छादयेत्ततः ॥ ३३

शङ्खे तीर्थाम्बु संपूर्य तीर्थान्यावाह्य मन्त्रतः ।
विलोड्य मूलमन्त्रेण गन्धाष्टकमपीष्टकम् ॥ ३४

पश्चादावाहयेच्छङ्खे देशिकः सकलाः कलाः ।
दश वह्नेः कलाः पूर्वं द्वादश द्वादशात्मनः ॥ ३५

कलाः षोडश सोमस्य पश्चात्पञ्चाशतः कलाः ।
जपित्वा(?) प्रतिलोमेन मूलमन्त्रं च मन्त्रवित् ॥ ३६

कलात्मकं शङ्खसंस्थं तीर्थं कुम्भेषु निक्षिपेत् ॥
गन्धाष्टकं तु त्रिविधं शक्तिविष्णुशिवात्मकम् ॥ ३७

चन्दनागरुकर्पूरचोरकुङ्कुमरोचनैः ।
जटामांसीकपियुता शक्तेर्गन्धाष्टकं विदुः ॥ ३८

चन्दनागरुह्रीबेर कुष्ठकुङ्कुमसेव्यकाः ।
जटमांसीसुरमति(?) विष्णोर्गन्धाष्टकं मतम् ॥ ३९

चन्दनागरुकर्पूरतमालजलकुङ्कुमम् ।
उशीरं कोष्ठसंयुक्तं शैवगन्धाष्टकं मतम् ॥ ४०

यादित्रयाक्षरं प्रोक्त्वा(?) अमुष्य पदमुद्धरेत् ।
क्रमात्प्राणा इह प्राणा तथा जीव इह स्थितः ॥ ४१

अमुष्य सर्वेन्द्रियाणि भूयोऽमुष्यपदं वदेत् ।
वाङ्मनोनयनश्रोत्रघ्राणप्राणपदान्यथ ॥ ४२

पश्चादिहागत्य सुखं चिरं तिष्ठन्तु *तद्वयम् ॥
अयं प्राणमनुः प्रोक्तः सर्वजीवप्रदायकः ॥ ४३

पूजाप्रकरणे प्रोक्तः कलाजालानि मर्मवित् ।
क्रमादावाह्य शङ्खे तज्जलं कुम्भेषु निक्षिपेत् ॥ ४४

कोष्ठे षोडशकुम्भानां मध्ये कुम्भे तु यन्त्रगे ॥
आवाहयेन्महालक्ष्मीं षोडशी विद्यया ततः । ४५

आवाहयेत्पञ्चदशघटे श्रीसूक्तदेवताः ।
श्रीषोडशार्णविद्यायामेका चन्द्रकला स्मृता ॥ ४६



* ठद्वयम् ॥

अवशिष्टे पञ्चदशे देवी श्रीसूक्तसंज्ञिका ॥
नित्या पञ्चदशानां तु मन्त्रः श्रीसूक्तमेव हि ॥ ४७

अवशिष्टा चन्द्रकला षोडशार्णमिति स्मृता ॥
तिथिरूपाः पञ्चा दश देवताः सूक्तदेवताः ॥ ४८

तस्माच्चन्द्रकला मध्ये परितः सूक्तदेवताः ।
आवाहयेत्ततो धीमान् ध्यानपूर्वोक्तमार्गतः ॥ ४९

मूलेनाप्युपचाराणि श्रीसूक्तेन तु कारयेत् ।
त्रिकोणस्थेषु कुम्भेषु वागींशीकमलासनौ ॥ ५०

उमामहेश्वरौ देवौ भूवराहौ च संस्मृतौ ।
वसुकोणस्थकुम्भेषु त्रिपुरासिद्धपद्मिनीम् ॥ ५१

मातङ्गीं भुवनेशीं च वाराहीमन्त्रदायिनीम् ।
राज्यदां पद्मिनीं लक्ष्मीं अर्चयेत्स्वस्वमन्त्रतः॥ ५२

दशकोणेषु वै तात मिथुनं दशकं भवेत् ।
रतिं च मन्मथं चैव वसुधारां चतुर्मुख । ५३

निधिं शङ्खाभिधं लक्ष्मीं वासुदेवाभिधं तथा ।
स्वर्णाकर्षकरं शक्त्या विभूत्या तु गणेश्वरम् ॥ ५४

वसुमत्या पद्मनिधिं प्रीत्या सह वसन्तकम् ।
एवमावाहयेन्मन्त्री तन्त्रमन्त्रेण मन्त्रवित् ॥ ५५

तद्बाह्ये विंशतिघटे ऋद्धितार्क्ष्यादिदेवताः ।
चतुर्दशसु कुम्भेषु रेणुकादींश्च देवताः ॥ ५६

बहिरष्टवटे तात पूजयेदर्णमादिका: ॥
षोडशेषु(?) च कुम्भेषु नित्या: षोडशिकास्तथा(?) ॥ ५७

चतुरस्त्रत्रये तात प्रथमे श्रीमुखा स्मृता ।
द्वितीये शाङ्करी मुख्या तृतीये चाष्टकुम्भके ॥ ५८

इन्द्रादयश्च दिक्पाला दमकाद्याश्च तद्बहि: ॥
एवमावाहयेद्धीमान् तत्तन्मन्त्रेण मन्त्रवित् ॥ ५९

उपचाराणि(?) सर्वाणि तत्तन्मन्त्रेण कारयेत् ।
तार्क्ष्यें नारायणं कृष्णं श्रीरामं सर्वसम्पुटम् ॥ ६०

सहस्त्रं प्रजपेद्धीमान् मध्यकुम्भे तु मन्त्रवित् ॥
त्रितयं संपुटीकृत्य षोडशार्णत्रिखण्डके ॥ ६१

तार्क्ष्येण सह संयोज्य सहस्त्रं प्रजपेद्बुध: ।
विद्यया संपुटीकृत्य मन्त्रमष्टोत्तरं शतम् । ६२

जप्त्वा तु प्रथमत्वेन संहारावरणं क्रमात् ।
अष्टोत्तरशतं सूक्तं प्रजपेत् पौरुषं तथा ॥ ६३

ब्रह्मादीनां च सर्वेषामष्टोत्तरशतं जपेत् ।
चतुर्वेदान् जपेद्विद्वान् द्वारकुम्भेषु वेदवित् ॥ ६४

एवं लक्ष्मीमहाविद्यां जप्त्वाऽऽचार्यवर: पुमान् ।
ततो होमं प्रकुर्वीत कुम्भानां वारुणे स्थले ॥ ६५

तत्र कुण्डं प्रकल्प्येत कार्यसिद्ध्यै चतुर्मुख ।
मध्ये तु चतुरस्त्रं स्यात् त्रिकोणं पूर्वके भवेत् ॥ ६६

अर्धचन्द्रं तु याम्ये स्यात् वर्तुलं पश्चिमे भवेत् ।
पद्माश्रमुत्तरे कुर्यात् कुण्डं मण्डपमध्यतः ॥ ६७

मेखलात्रयसंयुक्तं गुणत्रयमयं भवेत् ।
योनिरप्यत्र कर्तव्या वल(ट)च्छददलाकृतिः ॥ ६८

हैमैर्वा राजतैर्वापि कांस्यैमृर्द्भिरथापि वा ।
कल्पयेद्धोमपात्राणि उत्तमैर्मध्यमाधमैः ॥ ६९

अश्वत्थोदुम्बरप्लक्षन्यग्रोधसमिधस्तथा ।
पलाशबिल्वखदिरशम्यपामार्गशिंशुपाः ॥ ७०

दूर्वागलूचीकमलान्यक्षतं चाम्रपत्रकम् ।
माषमुद्गतिलाश्चैव यवाः पायसमेव च ॥ ७१

पञ्चगव्यं त्रिमधुरं हविराज्यं चतुर्मुख ।
एते शान्तिकराः प्रोक्ताः सर्वपापक्षयप्रदाः ॥ ७२

कमलं चन्दनैः सिक्तं समिधस्तु घृताप्लुताः ।
माषाद्या आज्यसिक्ताश्च होतव्या ज्वलितेऽनले ॥ ७३

पलाशपुष्पवद्वह्निजिह्वायां हुतमाचरेत् ।
पूर्वकुण्डे तु पालाशमश्वत्थं खदिरं जरी ॥ ७४

हेमदुग्धं तथा बिल्वं शिंशुपं दक्षिणे हुनेत् ।
प्लक्षं च खदिरं दूर्वां पश्चिमे जुहुयात्सुधीः ॥ ७५

न्यग्रोधश्च गलूची च शमी चोत्तरतो भवेत् ।
मध्यकुण्डे तु कमलमक्षतं चूतपल्लवम् ॥ ७६

मोचाफलं चेक्षुदण्डं मल्लिकाकुसुमं तथा ।
गुडं लाजं च कर्पूरखण्डं कल्हारमेव च ॥ ७७

मुद्गमाषं यवांश्चैव पञ्चगव्यं मधुत्रयम् ।
हविश्च परमान्नं च तिलं सर्वत्र होमयेत् ॥ ७८

सर्वत्रेध्मं पलाशं तु गव्यमाज्यं च सर्वतः ।
एवं विभज्य जुहुयान्मध्यकुण्डे महामते ॥ ७९

तार्क्ष्यं विष्णुं महालक्ष्मीमारभ्य कमलासन ।
देवताश्चक्रमध्यस्थाश्चाग्नावावाह्य पूजयेत् ॥ ८०

अग्नौ तु सकला देवास्तिष्ठन्त्यन्येऽपि सर्वदा ॥
देवता ऋषयः सर्वे ब्राह्मणाश्च विशेषतः ॥ ८१

तस्मादग्निमयं सर्वं चराचरमिदं जगत् ।
तस्माद्वह्नौ समावाह्य चक्रस्थाः सर्वदेवताः ॥ ८२

तत्तन्मन्त्रेण होतव्यं सर्वकाम्यप्रसिद्धये ।
प्रत्येकं तु शतं कृत्वा ताम्बूलान्तं प्रपूज्य च ॥ ८३

पूजां कृत्वा ततः पश्चादभिषेकं समाचरेत् ।
किञ्चित्साध्यं समानीय देशिकस्तु धृतव्रतम् ॥ ८४

संस्थाप्य स्थण्डिले पीठं तस्मिस्तं विनिवेशयेत् ।
रम्यैराभरणैर्वस्त्रैरलङ्कृत्य तमादरात् ॥ ८५

सुमङ्गलीभिर्नारीभिः कृताशीर्वदनान्वितम् ।
अर्चितानां द्विजातीनामाशीर्वादपुरःसरम् ॥ ८६

नदत्सु पञ्चवाद्येषु मुहूर्ते शोभने सुधीः ।
मध्यंस्थकुम्भमुद्धृत्य महालक्ष्मीमनुस्मरन् ॥ ८७

अभिषिञ्चेत्ततः साध्यं कलशैरपि देशिकः ।
करेणास्य शिरः स्पृष्ट्वा प्रयुञ्जीताशिषं गुरुः ॥ ८८

भद्रमस्तु शिवं चास्तु महालक्ष्मीः प्रसीदतु ।
रक्षन्तु त्वां सदा देवाः सम्पदः सन्तु तेऽचिरात् ॥ ८९

अथोऽभिषिक्तः साध्यस्तु वाससी परिधाय च ।
यथाविधि समाचम्य प्रणमेद् दण्डवद्गुरुम् ॥ ९०

ततो गुरुमुखान्मन्त्रान् गृह्णीयाच्छिष्यपुङ्गवः ।
सुमङ्गलीश्च पुरुषानाहूय मनुजोत्तमः ॥ ९१

यथावरणमार्गेण पूजां कुर्याद्विचक्षणः ।
पट्टवस्त्रोत्तरीयैश्च सुगन्धैश्च विभूषणैः ॥ ९२

भक्ष्यैश्च विविधैः पुष्पैर्मालाभिर्धूपदीपकैः ॥
प्रीयतां श्रीर्महालक्ष्मीः साङ्गावरणदेवता ॥ ९३

चतुःसमुद्रपर्यन्तां पृथिवीं मे प्रयच्छतु ।
ऐश्वर्यमतुलं भूयादायुर्वृद्धिं ददातु मे ॥ ९४

अनेन तात मन्त्रेण पूजनीयाः सभर्तृकाः ।
अर्चिताभिश्च नारीभिस्तथा च पुरुषोत्तमैः ॥ ९५

आशीर्वादं कृतं विद्वान् गृह्णीयाद्देशिकाग्रतः ।
ब्राह्मणानां धनं दद्यात् ऋत्विजां तु विशेषतः ॥ ९६

ब्राह्मणान्भोजयेत्पश्चात् दक्षिणाभिश्च भोजनैः ।
महान्तमुत्सवं कुर्यात् भवने बन्धुभिः सह ॥ ९७

तदा कृतार्थमात्मानं मन्वीत मनुजोत्तमः ।
कुम्भानामधिवासं तु रात्रौ कुर्वीत पूर्वतः ॥ ९८

अग्न्याराधनमन्यच्च रात्रौ पूजा च संस्मृता ।
इत्थं यस्याभिषेकस्तु क्रियते देशिकोत्तमैः ॥ ९९

साध्यस्तु तत्क्षणादेव महतीं श्रियमश्नुते ।
चतुःसमुद्रपर्यन्तां सशैलवनकाननाम् ॥ १००

सर्वसस्यसमायुक्तां नानारत्नैरलङ्कृताम् ।
धनराशिसमायुक्तां धान्यजालैरलङ्कृताम् ॥ १०१

नानाद्विजगणाकीर्णां नानापुरसमन्विताम् ।
लक्ष्मीसदृशनारीभिर्युक्तां चादेवमातृकाम् ॥ १०२

स्वेष्टवर्षासमायुक्तामनन्तगुणशोभिताम् ।
अकण्टकां महीं प्राप्य यावज्जीवं सुखी भवेत् ॥ १०३

रथैर्नागैश्च तुरगैः सर्वदा तु पदातिभिः ।
सेव्यते सततं श्रीमान् दीर्घमायुश्च विन्दति ॥ १०४

ब्राह्मणानां तथा राज्ञां वैश्यानामपि कारयेत् ।
एतद्धीमांस्तु नान्येषां कुर्यात्सम्पत्समृद्धये ॥ १०५

एतस्य सदृशं किञ्चिन्नास्त्येव भुवनत्रये ।
श्रीषोडशार्णमन्त्रेषु देवतासु महा पुरा ॥ १०६

विष्णुर्यथाऽहं देवानां नदीनां जाह्नवी यथा ।
यथेदमभिषेकं(?) तच्छ्रेष्ठाच्छ्रेष्ठतमं परम् ॥ १०७

न कस्यचिन्मयाख्यातं तव स्नेहात्प्रकीर्तितम् ।
महाभिषेकमेतत्तु सर्वेषां न प्रकाशयेत् ॥ १०८

लोके यावन्ति भूतानि तथा पापान्यनेकशः ।
अभिषेकात्सुरश्रेष्ठ शमनं यान्ति तत्वतः ॥ १०९

एवं ते सम्यगाख्यातं वैभवं मन्त्रसूक्तयोः ।
अभिषेकविधानं च सर्वमावरणक्रमम् ॥ ११०

प्रोक्तं सर्वं तव स्नेहादतः किं श्रोतुमर्हसि ॥ १११

इति श्रीमहालक्ष्मीकल्पे नारायणब्रह्मोमामहेश्वर-
संवादे प्रत्यक्षसिद्धिप्रदे महालक्ष्मी -
रत्न (कल्प) कोशाख्ये अष्टा-
विंशोऽध्यायः ॥

## ॥ एकोनत्रिंशोऽध्यायः ॥

ब्रह्मा -

नारायण नमस्तुभ्यं परब्रह्मस्वरूपिणे ।
श्रीषोडशार्णसूक्तं चाप्यभिषेकस्त्वयोदितः ॥ १

अभिषेकप्रकरणे त्वया प्रोक्तं मनुत्रयम् ।
श्रीमन्नारायणं पूर्वं पश्चाच्छ्रीकृष्णमेव च ॥ २

श्रीरामं च ततः पश्चाज्जप्तव्यं संपुटीकृतम् ।
एवं त्वयोक्तं मे देव संपुटीकरणं कथम् ॥ ३

श्रीषोडशार्णमन्त्रेण तार्क्ष्यसंपुटनं कथम् ।
एतत्सर्वं समाचक्ष्व सऋषिच्छन्दसं मनुम् ॥ ४

मन्त्रोद्धारक्रमं चैव सर्वं मे वद तत्त्वतः ॥ ५

श्रीभगवानुवाच -

संयक्पृष्टं त्वया ब्रह्मन् संपुटत्रयमादरात् ॥
गोप्याद्गोप्यतमो लोके श्रीमद्रूपो महामनुः । ६

सर्वदेवमयाकारं मां प्राहुर्ब्रह्मवित्तमाः ।
सर्वदेवीमयाकारा श्रीलक्ष्मीरिति गीयते ॥ ७

मद्रूपाः पुरुषा लोके गीयन्ते पुरुषोत्तम ।

लक्ष्मीरूपाः स्त्रियः प्रोक्ताः ब्रह्मविद्भिर्महामते ॥ ८

नारीनरमयं प्राहुर्जगत्सर्वं मुनीश्वराः ।
तस्मात्स्त्रीपुंमयं मन्त्रं गोप्याद्गोप्यमितीरितम् ॥ ९

सप्तकोटिमहामन्त्रेषूपमन्त्रेषु सर्वतः ।
स्त्रीदेवता महामन्त्रा लक्ष्मीमन्त्रां इति स्मृताः ॥ १०

पुंदेवताश्च मन्मन्त्राः प्रोक्ता योगीश्वरोत्तमैः ।
यत्फलं लभ्यते तेषां साङ्गोपासनतः पृथक् ॥ ११

सम्पुटीकृतमन्त्रेण क्षणात्तत्सर्वमश्नुते ।
एतन्मन्त्रस्य माहात्म्यं को वा जानाति पण्डितः ॥ १२

तस्माद्वक्ष्ये तव प्रीत्या सावधानमनाः श्रृणु ।
श्रीमत्तार्क्ष्यात्ममन्त्रस्य ऋषिः प्रोक्तोऽमृतेश्वरः ॥ १३

नृचिद्गायत्रमाख्यातं छन्दः सर्वर्षिसत्तमैः ।
तार्क्ष्यविष्णुमहाचिच्छ्रीदेवता संप्रकीर्तिता ॥ १४

श्रीवीजं बीजमित्याहुस्तारं शक्तिः प्रकीर्तिता ।
कीलकं वह्निजाया स्यात् योगः सर्वार्थसिद्धये ॥ १५

श्रीमन्त्रं पञ्चधा कृत्वा तार्क्ष्यपञ्चार्णमेव च ।
नारायणायेति मन्त्रमुद्धरेन्मन्त्रतत्ववित् ॥ १६

आदावष्टमवीजान्तं श्रियं क्षिन्नं समुद्धरेत् ।
क्रुद्धोल्कायेतिं मन्त्रान्ते वह्निजायां समुद्धरेत् ॥ १७

हृन्मन्त्रं हृदये विद्वान्न्यसेदङ्गुष्ठतो वशी ।
त्रिखण्डे प्रथमं प्रोक्त्वा(?) परामिति समुद्धरेत् ॥ १८

महोल्कायेति मन्त्रान्ते स्वाहा र्वां समुद्धरेत् ॥
तर्जन्या विन्यसेन्मूर्ध्नि मुद्रातत्त्वविचक्षणः ॥ १९

द्वितीयं खण्डमुच्चार्य तारं वायुं समुद्धरेत् ।
वीरोल्काय तु तस्यान्ते वह्निपत्नीं समुद्धरेत् ॥ २०

शिखायां विन्यसेद्धीमान् मध्यमान्तं च तत्ववित् ।
तृतीयखण्डमुद्धृत्य स्वाणां प्रोक्त्वा महामते ॥ २१

द्विसहस्रोल्कायपदं प्रोक्त्वा(?)स्वाहान्तकं मनुम् ।
नासापुटं समारभ्य नाभ्यन्तं कवचं न्यसेत् ॥ २२

मायादिपञ्चकं बीजं तदन्ते हायमित्यपि ।
पदोल्कायपदं स्वाहा कनिष्ठाङ्गुष्ठयोर्न्यसेत् ॥ २३

अङ्गुलीषु च विन्यस्य ध्यायेत्पूर्वोक्तमार्गतः ।
लक्ष्मीं चैव परां देवीं मदनं वाग्भवं ततः । २४

मायान्तरं च लक्ष्मीं च श्रियमुद्धृत्य तत्परम् ।
ओं नमः पदमुच्चार्य द्वितीयं खण्डमुच्चरेत् ॥ २५

---

स्वाहा नारायणायेति श्रीमत्स्वाहान्तको भवेत् ।
शक्त्यादिपञ्चबीजानि समुद्धृत्य मनुं जपेत् ॥ २६

श्रीमत्तार्क्ष्यात्मकं मन्त्रं सर्वसिद्ध्येककारणम् ।
किमत्र बहुनोक्तेन साक्षाद्वैश्रवणायते ॥ २७

द्विलक्षात्सर्वदेवत्वं प्राप्य लोके महीयते ।
त्रिलक्षात्तव रूपत्वं वेदलक्षाच्छिवो भवेत् ॥

तार्क्ष्यत्वं पञ्चलक्षेण षल्लक्षान्मत्स्वरूपधृक् ।
सप्तलक्षान्महालक्ष्मीरूपभाक् साधको भवेत् ॥

तार्क्ष्यमच्छ्रीस्वरूपेण भासते त्वष्टलक्षतः ।
एवं जप्त्वा(?) जपेद्धीमान् ब्रह्मभावेन चिच्छ्रियम् ॥

श्रीकृष्णगरुडं वच्मि देवानामपि दुर्लभम् ।
श्रीकृष्णतार्क्ष्यमन्त्रस्य अमृतानन्दभैरवः ॥

ऋषिश्च दक्षिणामूर्तिर्गायत्र्यौ छन्दसी स्मृते ।
देवता श्रीश्च कृष्णश्च तार्क्ष्यश्च परिकीर्तिताः ॥

क्लीं बीजं ह्रीं ततः शक्तिः श्रियं कीलकमीरितम् ।
ऐं वीजं क्लीं ततः शक्तिः सौः कीलकमथापि वा ॥

तार्क्ष्यरूपं वाग्भवं स्यात् क्लीं मदाकारमुच्यते ।
परा लक्ष्मीरिति प्रोक्ता तस्माद्बीजादि विन्यसेत् ॥

त्रितारीं च कुमारीं च समुद्धृत्य महामते ।
*श्रीमहापरमेत्युक्त्वा सुन्दरीति वदेत्ततः ॥

---

* ओं श्रां ऐं ह्रीं श्रीं ऐं क्लीं सौः श्रीं महापरमसुन्दरि सर्वज्ञायै क्लां सर्वज्ञशक्ति धाम्ने ब्रह्मात्मने स्वाहा हृदयाय नमः ।
ओं श्रीं ऐं ह्रीं श्री ऐं क्लीं सौः श्री महापरमसुन्दरि नित्यतृप्तायै क्लीं नित्यतृप्तिशक्तिधाम्ने नारायणात्मने स्वाहा शिरसे स्वाहा एवं शिखादिन्यासः ॥

एतत्साधारणं विद्यात् षडङ्गन्यासकर्मणि ।
श्रां प्रोक्त्वा(?) तां ततः पश्चात्सर्वज्ञायै पदं(?) वदेत् ॥ ३६

क्लां ब्रह्मात्मपदं प्रोक्त्वा तत्परं तु महामते ।
स्वाहेति पदमुद्धृत्य हृदये विन्यसेत्सुधीः ॥ ३७

पूर्ववत्सुन्दरीत्यन्तं समुद्धृत्य श्रियं तथा ।
नित्यतृप्तायेतिं पदं पश्चात्स्वं पदमुद्धरेत् ॥ ३८

विन्यसेन्मूर्ध्नि तत्पश्चात् सुन्दर्यन्तं तत्पूर्ववत् ।
श्रूमप्यनादिबोधायै क्लूं रुद्रात्मन इत्यपि ॥ ३९

अनादिबोध तत्पश्चात् शक्तिधाम्नेति संवदेत् ।
गरुडाय पदमुद्धृत्य शिखायै स्वाहया युतम् ॥ ४०

शिखायां विन्यसेद्धीमान् शिखामन्त्रेणतत्ववित्
सुन्दर्यन्तं ततः श्रैं च स्वतन्त्रायै पदं वदेत् ॥ ४१

क्लैं परात्मन इत्युक्त्वा स्वतन्त्रपद्पुमुद्धरेत् ।
शक्तिधाम्नेति संप्रोक्त्वा गरुडेति पदं वदेत् ॥ ४२

भञ्जयेति पदं प्रोक्त्वा प्रभञ्जययुगं वदेत् ।
प्रच्छेदययुगं पश्चात् प्रमर्दय च मर्दय ॥ ४३

कवचं विन्यसेद्धीमान् प्रोक्तमन्त्रेण मन्त्रवित् ।
सुन्दर्यन्तं ततः श्रौं च अलुप्तायै पदं वदेत् ॥ ४४

ब्रह्मात्मने च क्लौं पूर्वामलप्तेति पदं वदेत् ।

शक्तिधाम्ने ततः पश्चात् उग्ररूपेति (त) त्परम् ॥ ४५

धारकेति पदं पश्चात् अरगेति धारक ।
रेति सर्पं दहयुगं भस्मीकुरुयुगं ततः ॥ ४६

न्यसेन्नेत्रेषु मन्त्रेण मन्त्रतत्त्वविदां वरः ।
सुन्दर्यन्तश्च श्रः प्रोक्त्वा अनन्तायैपदं वदेत् ॥ ४७

क्लः परब्रह्मात्मनेति अनन्तेति पदं ततः ।
शक्तिधाम्ने ततः पश्चात् अप्रतिह पदं वदेत् ॥ ४८

त शासनाय हुं फट् च स्वाहान्तं मन्त्रमुद्धरेत्
अनेनास्त्रं न्यसेद्धीमान् पश्चाद् ध्यानं समाचरेत् ॥ ४९

अर्धं हैममथार्धमम्बुदनिभं वद्ध्वा ललाटे स्रजं
र्हकल्पिताचिद्विलाससदनं स्त्रीपुंमयं वैष्णवम् ।
हस्तैरादृतवेणुनालवरधृक् पद्माभयैः सर्वदा
यतः वस्तु चकास्तु मे हृदि महाताक्ष्यधिरूढं महः ॥ ५

आदौ त्रितारमुद्धृत्य वाग्भवं तदनन्तरम् ।
प्रथमं खण्डमुद्धृत्य परावीजमथोद्धरेत् ॥ ५१

कामं कृष्णाय तत्पश्चात् मदनं तत्परं भवेत् ।
द्वितीयं खण्डमुच्चार्य तत्परं मदनं पुनः ॥ ५२

ह्रीं गोविन्दाय संप्रोक्त्वा परावीजमथोद्धरेत् ।
तृतीयं खण्डमुच्चार्य वाग्भवं तदनन्तरम् ॥ ५३

† श्रियं गोपीजनेत्युक्त्वा वल्लभायाग्निभामिनीं
चत्वारिंशच्चतुश्चोर्ध्ववर्णं सर्वोत्तमोरामम् ॥ ५४

फलं पूर्वोक्तमेवस्याद्यन्त्रं श्रीचक्रमेव तु ॥
श्रीरामतारकं मन्त्रं वक्ष्यामि तव तत्वतः ॥ ५५

श्रीराममन्त्रराजस्य अर्धनारीश्वरो मुनिः ।
गायत्र्यौ छन्दसी प्रोक्ते रामः श्रीदेवता मम ॥ ५६

सं बीजमाहुतिः-शक्तिः श्रीबीजं कीलकं भवेत् ।
योगः सर्वार्थसिद्ध्यै स्यान्न्यासः पूर्वोक्तमार्गतः ॥ ५७

त्रितारीं च कुमारीं च तथा परमसुन्दरीं ।
श्रां सामादिषडङ्गं तु सर्वज्ञाद्याश्च पूर्ववत् ॥ ५८

रां हामित्यादिसंप्रोक्त्वा शेषं पूर्ववदाचरेत् ।
ब्रह्मा विष्णुश्च रुद्रश्च परमात्मा महामते ॥ ५९

षडङ्गदेवता ब्रह्मन् परब्रह्म प्रकीर्तिताः ॥
शक्तिधाम्नेति सर्वत्र योजनीयं चतुर्मुख ॥ ६०

पूर्वोक्तमण्डपे ध्यायेत् कल्पद्रोः पादमूलतः ।
सिह्मासने समासीनं दिव्यश्रीचक्ररूपके ॥ ६१

विल्वाकारमहाताक्ष्र्यसंस्थं रामं विचिन्तयेत् ।
सीतां ध्यायन्महालक्ष्मीं तां पूर्वोक्तविधानतः ॥ ६२

---

ऐं ह्रीं श्रीं ऐं क 5 ह्रीं क्लीं कृष्णाय क्लीं ह 6 क्लीं ह्रीं गोविन्दाय ग्लौः स 4 ऐं श्रीं गोपीजन वल्लभाय स्वाहा

वामाङ्के रामभद्रस्य संस्थितां पद्मधारिणीम् ।
जानक्याः स्तनयोरग्रे स्पृशन्तं वामपाणिना ॥ ६३

ज्ञानमुद्रां दक्षिणेन वहन्तं पाणिना सदा ।
एवं ध्यात्वा जपेन्मन्त्रं ब्रह्मात्मैक्यप्रदायकम् ॥ ६४

त्रितारं प्रथमं प्रोक्त्वा वाग्भवं तदनन्तरम् ।
सौभगं सोमखण्डान्तं रं रामायेति संवदेत् ॥ ६५

कामबीजं समुद्धृत्य सौरखण्डमतः परम् ।
मदनं खूं (घुं) ततः प्रोक्त्वा रामभद्राय तत्परम् ॥ ६६

पराबीजं समुद्धृत्य वह्निखण्डं अथोद्धरेत् ।
वाग्भवं हुं ततः प्रोक्त्वा जानकीवल्लभाय च ॥ ६७

स्वाहान्तको मनुरयं चतुश्चत्वारिंशदर्णकम् ॥ ? ॥
एतस्य सदृशं किञ्चिन्नास्त्येव भुवनत्रये ॥ ६८

चतुर्लक्षजपात्तात सर्वसिद्धिं समश्नुते ।
तृतीयं संपुटीकृत्य षोडशार्णे महामते ॥ ६९

जपेद्यदि महामन्त्रं सर्वयज्ञफलं लभेत् ॥
महादानफलं चैव नानाविधतपःफलम् ॥ ७०

लोके यावन्ति कर्माणि संपूर्णफलदानि च ।
सकृदुच्चारणादस्य तत्फलं लभते नरः ॥ ७१

ब्रह्महत्यादिपापानि दह्यन्ते तूलराशिवत् ।
गोसहस्रतुलादान प्रतिग्रहात्( ? ) ॥ ७२

यान्यार्जितानि पापानि लक्षमात्राद्विनाशयेत् ।
त्रिखण्डषोडशाक्षर्वां गायत्र्याः संपुटं चरेत् ॥ ७३

स्मरणान्मन्त्रराजस्य पापराशिमरं दहेत् ।
पातकानि विनश्यन्ति किं पुनस्तूपपातकैः ॥ ७४

लोके यावन्ति पापानि नानादुष्कर्मसंग्रहात् ।
तत्सर्वं नाशमायाति वह्निना तूलराशिवत् ॥ ७५

प्रायश्चित्ताद्यसाध्यानि पापानि कमलोद्भव ।
तान्यनेनैव साध्यानि पापानि विविधानि वै ॥ ७६

नारायणं च श्रीकृष्णं श्रीरामं षोडशार्णकम् ।
अपवर्गप्रदं तात तस्माद्गोप्यतमोत्तमम् ॥ ७७

प्रयुञ्जीयान्न मन्मन्त्रं श्रीमन्त्रं च कदाचन ।
यदि काम्यफलापेक्षा तदावरणदैवतम् । ७८

श्रीविद्यां संपुटीकुर्यात् श्रीसूक्तमपि मन्त्रवित् ।
यथावरणमार्गेण शतं विंशति संस्मृता (?) ॥ ७९

स्मरेत्तत्तत्फलावाप्त्यै सर्वसिध्यै सुरेश्वर ॥ ८०

इति श्रीमहालक्ष्मीकल्पे नारायणब्रह्मोमामहेश्वर-
संवादे प्रत्यक्षसिद्धिप्रदे महालक्ष्मी -
रत्न (कल्प) कोशाख्ये
एकोनत्रिंशोऽध्यायः ॥

## ॥ त्रिंशोऽध्यायः ॥

**ब्रह्मा -**

नारायण नमस्तेऽस्तु हरये परमात्मने ।
सर्वदेवमयाकार सर्वज्ञ करुणानिधे ॥ १

देव त्वं करुणामूर्तिर्मन्त्रयन्त्रात्मविग्रहः ।
सर्वज्ञ सर्वमन्त्राणां सर्वं (विधिं) वेत्सि यथातथम् ॥ २

अभिषेकविधौ शान्तिस्त्वयोक्ता होमरूपिणी ।
संक्षेपतस्तदा प्रोक्ता विस्तराद्वक्तुमर्हसि ॥ ३

**श्रीनारायणः -**

त्वं स्रष्टा सर्वभूतानां सर्वभूतहिते रतः ।
तस्माज्जगद्धितं पृष्ठं परया कृपया त्वया ॥ ४

महाशान्तिरियं लोके गोप्याद्गोप्यतरा सदा ।
रहस्यत्वान्न वक्तव्यं कस्मैचिदपि सुव्रत ॥ ५

त्वं श्रृणुष्व महाशान्ति सर्वसौभाग्यदायिनीम् ।
पराभिचारशमनां वन्ध्यापुत्रप्रदां पराम् ॥ ६

ज्वराद्यखिलरोगघ्नां सर्वभूतभयांवहाम् ।
प्रार्थितार्थप्रदां पुण्यां सर्वलोकशुभङ्करीम् ॥ ७

राज्यदां भ्रष्टराज्यानां परयन्त्रनिवारिणीम् ।
सम्पदामूर्ध्वजनकां राज्ञां वंशविवर्धिनीम् ॥ ८

राज्ञां विशेषतो ब्रह्मन् वंशवृद्धिजयप्रदाम् ।
सप्तक्षुद्रप्रशमनां समस्तापन्निवारिणीम् ॥ ९

नगरग्रामराष्ट्राङ्गवस्त्यालयसुखप्रदाम् ।
एतादृशीं महाशान्तिं कारयेद्राजसत्तमः ॥ १०

नगरग्रामराष्ट्राणां राजवंशनिवेशिनाम् ।
आलयानां महाशान्तिः कर्तव्या मन्त्रवित्तमैः ॥ ११

मारिज्वरमहाव्याधिपीडा यत्रोपजायते ।
जवनाः कृपणा हेया कूश्माण्डा डाकिनीगणाः ॥ १२

कपालमालिन्याद्याश्च शाकिन्यो रक्तभोजनाः ।
अन्याश्चैवंप्रकारेण स्त्रीपुंरूपाः प्रकीर्तिताः ॥ १३

एतैर्महाबलैस्तात हतेषु नगरादिषु ।
महाशान्तिस्तु कर्तव्या द्रव्यैर्बहुविधैरपि ॥ १४

देशिकं तु समासाद्य लक्ष्मीमन्त्रपरायणम् ।
दण्डवत्प्रणिपातेन प्रार्थयित्वा स्वभक्तितः ॥ १५

तोषयित्वा गुरुं यत्नान्महाशान्तिं प्रवर्तयेत् ।
यस्तु राजा हि लोभेन न कारयति दुर्मतिः ॥१६

राजाऽभिमानी स क्षिप्रं सराष्ट्रपुरवाहनः ।
अदृश्यैस्तु महाभूतैः पीड्यमानो न वर्धते ॥ १७

बान्धवाश्च क्षयं यान्ति तद्गृहं भस्मसाद्भवेत् ।
विभवाश्च क्षयं यान्ति मृत्युर्वसति तद्गृहे ॥ १८

नगरेषु च राष्ट्रेषु ग्रामेषु च गृहेषु वा ।
ज्वरादयः प्रवर्तेरन् तदा शान्ति समाचरेत् ॥ १९

[1]मन्त्राः न्मत्रयाकारन् हरेश्रीकृष्ण रामयोः ।
तथान्यसंपुटैश्चापि लक्ष्मीमन्त्रेण महोयेत्[2] ॥ २०

त्रिविधं शान्तिकर्मापि कथ्यते मन्त्रवित्तमैः ।
प्रथमस्त्वभिषेकस्तु द्वितीयो होम उच्यते ॥ २१

मन्त्रसाधारणं चैव तृतीयं सर्वमङ्गलम् ।
होमस्तु कोटिलक्षं च ह्ययुतं च पृथक् पृथक् ॥ २२

कर्तव्यो नगरस्यैव राष्ट्रग्रामगृहादिनाम् (?) ।
होमकुण्डं च कर्तव्यं तत्तत्कर्मानुसारतः ॥ २३

चतुरस्रं सुरश्रेष्ठ सर्वकामार्थसाधनम् ।
प्रजाऋद्धिकरं चैवाप्यर्धचन्द्रं रिपुक्षयम् ॥ २४

त्रिकोणं शान्तिदं प्रोक्तं पर्जन्यार्थी तु वंतुलम् ।
पञ्चास्रं रोगनाशाय जयार्थं चैव पद्मकम् ॥ २५

*सप्तास्रं पुष्टिदं प्रोक्तं अष्टाश्रं श्रेयसे भवेत् ।
नगरस्य चतुर्दिक्षु मध्यमे चैव मण्डपे ॥ २६

---

1. आत्म मन्त्रत्रयाकारम् 2. होमयेत्

*पञ्चास्रात्परं षडस्रस्य नास्त्युल्लेखः । तथापि "जयार्थं च षडस्रकं" इति वक्तव्यमुचितं स्यात् इति मन्महे ।

षोडशस्तम्भक्लृप्ताङ्गं मध्ये द्विगुणितं भवेत् ।
चतुर्द्वारसमायुक्तं तोरणावलिराजितम् ॥ २७

मालाभिरावृतं सौम्य दर्भमालाविराजितम् ।
मुकुरैश्चामरैश्चैव सर्वतः समलङ्कृतम् ॥ २८

एवं तु मण्डपं कुर्यात् दिक्षु मध्ये च विस्तृतम् ।
वेदिका तत्र कर्तव्या चतुर्हस्तप्रमाणतः ॥ २९

एवं कूर्पकरोच्छ्राया विशुद्धा सुमनोहरा ।
एवं कृत्वा विशेषज्ञः कुण्डं मण्डपमध्यतः ॥ ३०

ऋत्विजो वरणीयाः स्युः शान्तये मन्त्रपारगाः ।
पुरश्चरणसिद्धाश्च गुरुमन्त्रपरायणाः ॥ ३१

अदाम्भिकाः सत्वनिष्ठा रागद्वेषविवर्जिताः ।
तेषां वसानं क्षौमं च हस्तकर्णविभूषणम् ॥ ३२

आसनादिकमन्यच्च दद्यांच्चाचार्यपुङ्गवः ।
पट्टवस्त्रपरीधानं दिव्यगन्धानुलेपितम् ॥ ३३

नानाभरणनद्धाङ्गं स्वर्णयज्ञोपवीतिनम् ।
कौशेयक्षौमसहितं गुरुं राजा प्रणम्य तु ॥ ३४

यागमण्डपमासाद्य वृणीयादृत्विजःस्वयम् ।
आचार्यं मत्स्वरूपेण ध्यात्वा वरणमाचरेत् ॥ ३५

कुम्भाश्च लक्षणोपेताश्चत्वारश्च पृथक् पृथक् ।
कूर्चाक्षतसमायुक्ताश्चूताश्वत्थदलान्विताः ॥ ३६

सुवस्त्रवेष्टिताः सौम्याः संविधानसमाश्रयाः ।
निधाय वेदिकायास्तु चतुर्द्वारेषु चार्चयेत् ॥ ३७

अभिषेकविधौ प्रोक्तानष्टोत्तरशतान् घटान् ।
पूर्ववत्स्थापयेद् धीमान् वेदिकायां महामतिः ॥ ३८

पूर्वोक्तेनैव मार्गेण कलाद्यावाहनं चरेत् ।
पूजयेच्च महालक्ष्मीं देवतावरणक्रमात् ॥ ३९

तार्क्ष्यस्य मम लक्ष्म्याश्च बिम्बं कृत्वा विचक्षणः ।
कुम्भमध्ये प्रतिष्ठाप्य पूजयेदुपचारतः ॥ ४०

तत्तत्कुम्भेषु बिम्बानि लक्ष्म्यास्त्वावरणक्रमात् ।
तत्तद्दैवतरूपेण कृत्वा संस्थापयेद्गुरुः ॥ ४१

षोडशैरुपचारैश्च(?) संपूज्य विधिवत्ततः ।
पश्चिमे वेदिकायाश्च कुण्डे होमं समारभेत् ॥ ? ॥ ४२

मध्ये तु चतुरश्रादिकुण्डादिषु च पूर्ववत् ।
पात्राणि पूर्वमुक्तानि कृत्वा कुण्डेषु होमयेत्(?) ॥ ४३

वास्तुयागं चरेद् धीमान् पश्चाद्धोमं गणेशितुः ।
कदलीक्षुगुडैर्लाजैर्मोदकैः पायसैरपि ॥ ४४

नालिकेरैस्त्रिमध्वक्तैः कपित्थैः पनसैरपि ।
होमयेत्(?) पृथुकैः कुण्डे वर्तुले वेदिकोत्तरे ॥ ४५

प्रतिमापि सुसंपूज्या गन्धपुष्पैर्गणेशितुः ।
महागणेशमन्त्रेण पृथगष्टोत्तरं हुनेत् ॥ (?) ॥ ४६

एवं संपूजितो विघ्नः सहसा संप्रसादति ।
कर्मणां चैव सर्वेषां निष्प्रत्यूहं करोत्यसौ ॥ ४७

कार्यसिद्धिं च सर्वेषां सर्वशान्तिं करोति च ।
एवं गणेशमाराध्य महाहोमं समाचरेत् ॥ ४८

ऋग्यजुःसामवेदांश्च अथर्वाणं परात्परम् ।
पूर्वादितो दिशां स्थाने स्थापयेद्वेदपारगान् ॥ ४९

हरित्पतीनामाशासु तत्तन्मन्त्रविदःक्रमात् ।
निवारणार्थं भूतानां कर्मप्रत्यूहकारिणाम् ॥ ५०

निवेशयेज्जपेयुस्ते न्यासध्यानपुरःसरम् ।
द्वारपालजपं चैव पूर्वादि परिकल्पयेत् ॥ ५१

निवारयन्ति सुप्रीताः प्रत्यूहान् द्वारपालकाः ।
अश्वत्थोदुम्बरैश्चैव पूर्वोक्तैरभिषेचने ॥ ५२

पूर्वोक्तेनैव मार्गेण तत्तत्कुण्डेषु होमयेत् ।
सूर्यकान्तादिसंभूतं यद्वा श्रोत्रियगेहजम् ॥ ५३

आनीयचादधीताग्निं कुशैः प्रज्वाल्य यत्नतः ।
संप्रोक्ष्य याज्ञिकैः काष्ठैः पुनः प्रज्वालयेद्बुधः ॥ ५४

प्राणायामं ततः कृत्वा परिस्तीर्य कुशोत्तरैः ।
स्वगृह्योक्तविधानेन सर्वं कुर्यादतन्द्रितः ॥ ५५

पात्राण्यासाद्य विधिवदिध्मतन्त्रेण मन्त्रवित् ।
तान्यवोक्ष्य पवित्रेण चोत्तानानि निधाय च ॥ ५६

पुनः प्रोक्ष्यानयेत्पात्रं परिपूर्य शुभाम्बुना ।
दत्त्वाक्षतान् पवित्रं च तत्रोत्पूय निधाय च ॥ ५७

दिश्युत्तरस्यां तत्पात्रं प्रणीतेत्युच्यते बुधैः ।
आज्यं संस्कृत्य विधिवत् स्रुक्स्रुवौ चोमिति ब्रुवन् ॥ ५८

एवमग्नौ सुसंपन्ने ततश्च श्रपयेच्चरुम् ।
इध्माधानाद्यग्निमुखमाज्यभागान्तमाचरेत् ॥ ५९

तत्राग्नौ पूजयेद्देवीं पूर्वोक्तावरणक्रमात् ।
अथ द्रव्यैर्हुनेद्धीमान् सप्रमाणैर्महामते ॥ ६०

*वातायनमरीच्यन्तःस्फुरत्यणु च यद्रजः ।
परमाणुरिति ख्यातं तन्मानं प्रथमं स्मृतम् ॥ ६१

तत्र यत्र स रेणुःस्यादष्टौ चैता विलक्षकाः ।
तद्रजः सर्षपास्तिस्रः तत्र यो गौरसर्षपः ॥ ६२

सर्षपाः षड् यवो मध्यस्त्रियवं त्वेककृष्णलम् ।
पञ्च कृष्णविको माषः तेषु( ?) वर्तस्तु षोडश ॥ ६३

चतुःसुवर्णको निष्को विज्ञेयं तु प्रमाणतः ।
निष्कस्य लक्षणं ह्येतत् कर्षं चापि तथाविधम् ॥ ६४

कर्षमानं घृतं होमे पयः शुक्तिमितं भवेत् ।
पञ्चगव्यानि तत्तुल्यमानानि कथितानि वै ॥ ६५

* द्रव्यपरिमाणं वक्तुमुपक्रमते वातायनेत्यादिना ॥

तत्समं मधुदुग्धान्नमक्षपात्रमुदाहृतम् ।(?)
दधि प्रसृतिमात्रं स्यात् लाजाःस्युर्मुष्टिमानतः ॥ ६६

तत्समाःपृथुकाश्चैव सक्तवोऽपि तथा मताः ।
गुडं पलार्धमानं स्यात् शर्करापि तथाविधा ॥ ६७

ग्रासार्धं चरुमानं स्यात् इक्षुः पर्वावधिःस्मृतः ।
पुष्पपत्राणि चैकैकं तथापूपानि कल्पयेत् ॥ ६८

कदलीफलनारङ्गफलान्येकैकशो विदुः ।
मातुलिङ्गं(?) चतुःखण्डं पनसं शतधाकृतम् ॥ ६९

अष्टधा नालिकेराणि खण्डितानि भवन्ति च ।
त्रिधाकृतं फलं वैल्वं कपित्थं तु द्विधाकृतम् ॥ ७०

उर्वारुकफलं होमे त्रिधा वै खण्डितं भवेत् ।
फलान्यन्यानि खण्डानि समिधःस्युर्दशाङ्गुलाः ॥ ७१

एकाग्रा ऋजवः पूर्णाः सत्वचः कीटवर्जिताः ।
चण्डालाद्यैरविक्रीताः समिधः फलदायकाः ॥ ७२

दूर्वात्रयं समुद्दिष्टं गलूची चतुरङ्गुला ।
व्रीहयो मुष्टिमात्रं स्यात् मुद्गमाषयवास्तथा ॥ ७३

तण्डुलाः स्युस्तदर्धं स्यात् कोद्रवा मुष्टिसंमताः ।
गोधूमा रक्तकलमा मुष्टिमानाः समीरिताः ॥ ७४

विल्वाश्चुलुकमात्राः स्युः सर्षपास्तत्प्रमाणकाः ।
शुक्तिप्रमाणं लवणं मरिचान्यष्टविंशतिः ॥ ७५

पुरं च दशमानं स्यात् रामं तत्समुमीरितम् ।
चन्दनागरुकर्पूरकस्तूरीकुङ्कुमानि तु ॥ ७६

चिञ्चाबीजप्रमाणानि कथितानि महामते ।
अनुक्तमानान्यपि च द्रव्याण्येवं प्रकल्पयेत् ॥ ७७

एवं प्रमाणं कथितं द्रव्याणां ते चतुर्मुख ।
होमकाले तु संप्राप्ते वह्नेर्ध्यानं परं शृणु ॥ ७८

समिद्धोमे स्थितं ध्यायेच्छयानं चाज्यहोमके ।
शेषवस्तुष्वभिध्यायेत् निषण्णं हव्यवाहनम् ॥ ७९

एवं ध्यात्वा तु जुहुयात्सर्वद्रव्याणि मन्त्रवित् ।
अग्नेः स्वरूपं वक्ष्यामि शुभाशुभनिवेदकम् ॥ ८०

स्वर्णसिन्दूरबालार्ककुङ्कुमक्षौमसन्निभः ।
सुवर्णरेतसो वर्णः शोभनः परिकीर्तितः । ८१

भेरीवारिदहस्तीन्द्रध्वनिश्चापि शुभावहः ।
नागचम्पकपुन्नागपाटलीयूथिकानिभः ॥ ८२

पद्मेन्दीवरकल्हारसर्पिर्गुग्गुलुसन्निभः ।
पावकस्य शुभो गन्धः साधकाभ्युदयावहः ॥ ८३

प्रदक्षिणास्त्वकम्पाः छत्राभाः शिखिनः शिखाः ।
शुभदा यजमानस्य राज्यस्यापि विशेषतः ॥ ८४

शङ्खेन्दुधवलो धूमो वह्नेः प्रोक्तः शुभावहः ।
कृष्णः कृष्णगतेर्धूमो होतुर्दुःखप्रदो भवेत् । ८५

छिन्नप्रकाशिखा लैप्या(?) मृत्युर्धनपरिक्षयः ॥
शुक्लच्छदनिभो धूमः पारावतसमप्रभः ॥ ८६

हानिं तुरगजातीनां गवां च कुरुते ध्रुवम् ।
एवंविधेषु दोषेषु प्रायश्चित्ताय देशिकः ॥ ८७

मूलेनाज्येन जुहुयात् पञ्चविंशतिमाहुतेः ।
पायसेन तथा ब्रह्मन् पञ्चगव्येन शान्तये ॥ ८८

शतमष्टोत्तरं तत्तद्रव्यं मूलेन होमयेत् ।
आचार्यो मध्यमे कुण्डे दिक्कुण्डेषु च ऋत्विजः ८९

मध्यमे षोडशार्णेन श्रीचतुष्केण दिक्षु च ।
यथावरणमार्गेण तत्तन्मूलेन मध्यमे ॥ ९०

श्रियं सिद्धां महालक्ष्मीं राज्यदां परितो हुनेत् ।
प्रायश्चित्तान्ततः कृत्वा पश्चात्कर्म समापयेत् ॥ ९१

एवं संयक् विदित्वा तु कर्म यः कुरुते द्विजः ।
संपूर्णफलमभ्येति लोके मन्त्रविदां वर ॥ ९२

अभिषेकं चरेद् धीमान् साध्यस्यं पुरुषर्षभ ।
महाशन्तिरियं भद्र सम्यक् प्रोक्तं तवानघ ॥ ९३

नानाविधमहोत्पातें दृश्यमाने महामते ॥
आलयेषु च विम्बानामश्रुपाते चतुर्मुख ॥ ९४

चलने हसने चैव भ्रमणे कम्पने तथा ।
शिथिलीमधु(?) वल्मीकाद्युत्पाताभिप्रदर्शने ॥ ९५

भूमिकम्पे दिशादाहे पांसुपाषाणवर्षयोः ।
इन्द्रध्वजावपतने गोपुरादिप्रभञ्जने ॥ ९६

काककौशिकगृध्राणां तथाऽशुभपतत्रिणाम् ।
प्रवेशने संकरणे(?) विमानेषु पुनस्तथा ॥ ९७

प्रवेशस्पर्शने चैव तस्य दोषस्य शान्तये ।
शान्तिकर्म विधातव्यं दोषज्ञेन विपश्चिता ॥ ९८

महाभिषेकैः पूर्वोक्तैर्मूलमन्त्राभिमन्त्रितैः ।
विशेषपूजा नैवेद्यैर्होमैः संसिद्धसाधनैः ॥ ९९

विचार्य राजा विद्वद्भिः दोषाणां गुरुलाघवम् ।
तत्र दोषानुरूपेण शान्तिकर्म प्रवर्तयेत् ॥ १००

उपसर्गास्तु वै ब्रह्मन् देवेनाभिप्रचोदिताः ।
राज्यराष्ट्रजनानां च भविष्यद्दुःखशंकिना ॥ १०१

शान्तिस्तु विधिवत्कार्या राज्ञा बुध्या विशेषतः ।
द्रव्यैरुच्चावचैश्चैव गुरुलाघवहेतुतः ॥ १०२

क्षीरादिस्नपनैश्चैव महापूजाविधानकैः ।
होमैर्महाशान्तिकैर्महापारायणैरपि ॥ १०३

महामन्त्रजपैश्चैव विधिवद् ब्राह्मणाशनैः ।
उपसर्गा विनश्यन्ति तद्राष्ट्रं तु समृद्धिमत् ॥ १०४

धनधान्यसमायुक्तं हृष्टलोकं समेधते ।
राज्ञां कुलं सुरश्रेष्ठ कालकर्मविपर्ययात् ॥ १०५

पूर्वजानां कृतैःपापैर्द्विजगोवेदनिन्दया ।
असंमानादधिक्षेपात् दण्डयेत् दण्डधारणात् ॥ १०६

असन्मार्गाद् गृहीत्वा च विहितानामपालनात् ।
कालान्तरेण फलितैः पादपैरिव कर्मभिः ॥ १०७

क्रमेण सर्वैः सन्त्यक्तं अटवी च भवेत्तदा ॥
एवं क्षये तु संप्राप्ते महाशान्ति प्रयोजयेत् ॥ १०८

वर्धन्ते सम्पदस्तस्य सन्तानं च समेधते ।
आचन्द्रतारकं भूमौ कुलं चाप्यनुवर्धते ॥ १०९

तस्मिन् कुले च राजानो धर्मिष्ठाः सत्यवादिनः ।
भवेयुर्वीर्यवन्तश्च द्विजगोदेवसम्मताः ॥ ११०

महाशान्तिरियं ब्रह्मक्षत्रवैश्यादीनां चरेत्(?) ।
पुरराष्ट्रालयग्रामगृहादीनां चरेत्सुधीः ॥ ११२

एषा शान्तिर्मया प्रोक्ता तव स्नेहाद्दयावता ।
न प्रकाश्येयमाख्येया न कस्यापि महामते ॥ ११२

वैभवं बिन्दुमध्यस्थदेवतायाः प्रकीर्तितम् ।
वैभवात् षोडशार्णस्य सर्वमन्त्राः स्फुरन्तु ते ॥ ११३

द्वादशावरणां लक्ष्मीं नवमावणक्रमात् ।
पूजां कुरु विधानेन पुष्टो लोको भवेत्ततः ॥ ११४

सृष्टिस्थितिलयं चैव करोत्येव महामनुः ।
लयं स्थितिं च सृष्टिं च तनोति च महामते ॥ ११५

श्रियस्त्वावरणे तात देवताचि*न्त्यवैभवाः ।
सर्वास्ता मत्प्रसादेन प्रसन्नाःसन्तु तेऽचिरात् ॥ [illegible]

श्रीविद्यायां च ये मन्त्राः सर्वसिद्धिप्रदायकाः ।
श्रीचक्रक्रममार्गेण तत्तन्मन्त्राःस्फुरन्तु ते ॥ ११७

इति श्रीमहालक्ष्मीकल्पे नारायणब्रह्मोमामहेश्वर-
संवादे प्रत्यक्षसिद्धिप्रदे महालक्ष्मी -
रत्न (कल्प) कोशाख्ये
त्रिंशोऽध्यायः ॥

---

* अचिन्त्यवैभवाः

## ॥ एकत्रिंशोऽध्यायः ॥

महादेवः -

एवं देवि तदा ब्रह्मा प्रोक्तः श्रीपतिना प्रभुः ।
तत्क्षणाद्ज्ञातवान् तत्तद्देवतानां बहून्मनून् ॥ १

षोडशार्णं तथा सूक्तं चक्रं पूजाक्रमं परम् ॥
साधनं सर्वमन्त्राणां अनुष्ठानविधिं तथा ॥ २

पुरश्चर्याक्रमं देवि लक्ष्म्याश्चावरणक्रमम् ।
षडङ्गं गुप्तमन्त्राणां सरस्वत्यादिमूर्तिनाम्(?) ॥ ३

त्रिपुराद्यष्टदेवीनां महामन्त्रान् सुरेश्वरि ।
रत्यादिमिथुनानां च ऋद्ध्यादिदशयुग्मकम् ॥ ४

रेणुकादिमहामन्त्रान् नित्याषोडशदेवताः ।
अणिमाद्यष्टमन्त्रांश्च श्रीलक्ष्म्यादिमहामनून् ॥ ५

शार्ङ्ग्यादिमहामन्त्रान् दिक्पतीनां महामनून् ।
दमकादिमहामन्त्रान् उत्तमांश्च महामनून् ॥ ६

सर्वसंपुटमन्त्रांश्च आगमादि महामनून् ।
सच्चिदानन्दरूपस्य विष्णोरमिततेजसः ॥ ७

प्रसादेन महादेवि ज्ञात्वा विस्मयमागतः ः
अहो चित्रमहोचित्रं मया विष्णोरनुग्रहात् ॥ ८

अश्रुता बहवो ज्ञाता श्रियस्त्वालरणक्रमः ।
आश्चर्यं षोडशार्णस्य वैभवं सूक्तवैभवम् ॥ ९

श्रीचक्रवैभवं चित्रं चित्रमष्टाक्षरं परम् ।
श्रीकृष्णरामयोश्चित्रं गायत्रीसंपुटं महत् ॥ १०

सर्वज्ञादिमहामन्त्रं(?) तत्तत्सिद्धिप्रदायकम् ।
त्रिशक्तीनां त्रिमूर्तीनां मन्त्राश्चाचिन्त्यवैभवाः ॥ ११

त्रिपुरादिमहामन्त्रा षोडशार्णमनोःसमाः ।
रतिकामादिमन्त्राश्च सर्वसिध्येककारणाः ॥ १२

ऋध्यादिदशयुग्मानां मन्त्राणां वैभवं महत् ।
चतुर्दशानां मन्त्राणां वैभवं परमाद्भुतम् ॥ २३

षोडशानां च नित्यानां अष्टसिद्धिमनोरपि ।
तथान्ये च महामन्त्राः सर्वदाचिन्त्यवैभवाः ॥ १४

मया ज्ञाता महाविष्णोः प्रसादात्परमात्मनः ।
एवं विस्मयमासाद्य यन्त्रान्नानाफलप्रदान् ॥ १५

नानाविधानां सिद्धीनामाकरोऽभूत्प्रजापतिः ।
स्वधाम प्राप्तवान् देवीप्रसादात्सर्वसिद्धिदः ॥ १६

एवं लक्ष्मीमहामन्त्रमुपास्य परमाद्भुतम् ।
सृष्ट्वा लोकान् तदा ब्रह्मा पालयामास सर्वदा ॥ १७

एवं स्थिते महादेवि ब्रह्माणं प्राप्तवानहम् ।
प्राप्य प्रजापतिं तत्र नमस्कृत्य पितामहम् ॥ १८

प्रजापते नमस्तुभ्यं सर्वज्ञ सुरसत्तम ।
सृष्टिस्थितिलयादीनां कारणं केन जायते ॥ १९

अष्टैश्वर्यं विशेषेण केन वा जायते नृणाम् ।
दारिद्र्यनाशनं भुक्तिमुक्तिदानैकतत्परम् ॥ २०

मनूनां सप्तकोटीनां एकेन मनुना कथम् ।
भवेत्सर्वं ममाचक्ष्व मयि यद्यस्ति ते कृपा ॥ २१

इत्युक्तस्तु मया ब्रह्मा देशिकः करुणानिधिः ।
श्रीषोडशार्णविद्यायां सर्वमन्त्रानुपादिशत् ॥ २२

तस्माल्लक्ष्मीमहाविद्यां प्राप्तवानस्मि सुव्रते ।
एतत्सर्वं तव प्रोक्तं संवादं( ?) ब्रह्मणो हरेः ॥ २३

तार्क्ष्यविष्णुमहलक्ष्म्या वैभवं तव वर्णितम् ।
एतद्गोप्यतमं गौरि पुनः किं श्रोतुमिच्छसि ॥ २४

इति श्रीमहालक्ष्मीकल्पे नारायणब्रह्मोमामहेश्वर-
संवादे प्रत्यक्षसिद्धिप्रदे महालक्ष्मी -
रत्न (कल्प) कोशाख्ये एक-
त्रिंशोऽध्यायः ॥

## ॥ द्वात्रिंशोऽध्यायः ॥

श्रीदेव्युवाच

देवादिदेव सर्वज्ञ सर्वभूतहिते रत ।
त्वं वेत्ता सर्वमन्त्राणां श्रीविद्याया विशेषतः ॥ १

वैभवं षोडशार्णस्य ध्यानपूर्वमुदाहृतम् ।
द्वादशावरणं प्रोक्तं नवमावरणक्रमम्(?) ॥ २

चक्रोल्लेखनमार्गश्च दर्शितं यजनं तथा ।
मन्त्राणां साधनं देव पुरश्चर्याक्रमः श्रुतः ॥ ३

श्रुतानि मन्त्रजालानि श्रुतं श्रीसूक्तवैभवम् ।
त्वयोक्तानि महालक्ष्म्या यन्त्राणि विविधानि च ॥ ४

उक्तानि विनियोगानि(?) होमजालानि तत्वतः ।
प्रोक्तं कुण्डविधानं च वह्नेर्ध्यानं प्रकीर्तितम् ॥ ५

जिह्वाभेदाश्च कथिता सर्वयोगाः प्रदर्शिताः ।
अभिषेकविधानं च सर्वसम्पत्करं श्रुतम् ॥ ६

श्रीमन्नारायणादीनां विद्यायां सम्पुटं(?) श्रुतम् ।
श्रुता मया महाशान्तिः सर्वपापप्रणाशिनी ॥ ७

होमद्रव्यादिमानं च देव प्रोक्तं मया श्रुतम् ।
प्रजापतेर्महाविष्णोः संवादं(?) परिकीर्तितम् ॥ ८

ब्रह्मणः सर्वमन्त्राणां प्राप्तिरत्र महेश्वर ।
तस्मात्प्राप्ता महामन्त्राः षोडशार्णमुखास्त्वया ॥ ९

इदानीं श्रोतुमिच्छामि तदावरणदेवताः ।
तासां मन्त्रान् महादेव सऋषिच्छन्दसांस्तु तान् ॥ १०

तत्तद्ध्यानं तु यन्त्राणि प्रयोगं वैभवं परम् ।
श्रीविद्यायां तु ये मन्त्रा षोडशार्णसमाःस्मृताः ॥ ११

तान् मे सर्वं समाचक्ष्व विस्तरात्करुणाकर ।

श्रीमहादेवः-

शृणु भद्रे महादेवि पद्मपत्रायतेक्षणे ॥ १२

दुर्लभं सर्वदेवानां षोडशार्णं महेश्वरि ।
यस्य स्मरणमात्रेण सर्वलोकं(?) च ऋद्धिमत् ॥ १३

श्रीविद्याया महामन्त्रा बहवः सन्ति सुव्रते ।
एक एव मनुस्तेषु भुक्तिं मुक्तिं प्रयच्छति ॥ १४

सर्वेषामेव मन्त्राणां किं वक्तव्यं महेश्वरि ।
सप्तकोटिमहामन्त्रास्तत्रैवान्तर्भवन्ति ते ॥ १५

महेश्वरवराहाणां कोटिर्मन्त्रेषु संस्मृता ।
त्रिपुराद्यष्टमन्त्रेषु कोटिस्तदनु सुन्दरि ॥ १६

रत्यादीनां च मन्त्रेषु कोटिसंख्या महेश्वरि ।
ऋद्ध्यादिदशयुग्मानां मन्त्रकोटिः प्रकीर्तिता ॥ १७

रेणुकादिमहामन्त्रे(?) कोटिमन्त्राः प्रकीर्तिताः ।
अणिमाद्यष्टसिद्धीनां मन्त्रकोटिः सुरेश्वरि ॥ १८

कामेश्वर्यादिनित्यानां मन्त्रेष्वेका प्रकीर्तिता ।
सप्तकोटिमहामन्त्रा इत्थमन्तर्भवन्ति च ॥ १९

एतेषां षोडशाक्षर्यामन्तर्भावः सुरेश्वरि ।
एषाप्येकाक्षरे देव्यामन्तर्भवति तत्वतः ॥ २०

सैव नित्येति संप्रोक्ता परब्रह्मस्वरूपिणी ।
तत्वातीता परा चेति विस्तृता मन्त्रवित्तमैः ॥ २१

एकाक्षरीविकारं च षोडशाक्षरमीरितम् ।
षोडशार्णविकारास्ते मन्त्रावरणदेवताः ॥ २२

तस्मान्मन्त्रान्प्रवक्ष्यामि लक्ष्म्यास्त्वावरणक्रमात् ।
षडङ्गगुप्तमन्त्रस्य ऋषिः सर्वज्ञ उच्यते ॥ २३

छन्दोऽनुष्टुप् समाख्यातं सर्वज्ञाद्याश्च देवताः ।
तासामाद्यक्षरं वीजं स्वाहा शक्तिरतः परम् ॥ २४

सर्वाभीष्टार्थसिध्यर्थे विनियोगो वरानने ।
तत्तद्दीर्घविसर्गान्तं बीजं न्यासं(?) कराङ्गयोः ॥ २५

सर्वाज्ञाद्याश्च षड्देव्यो नानाभरणभूषिताः ।
वरदात्तकराम्भोजाः प्रसन्नवरदेक्षणाः ॥ २६

पङ्कजद्वयधारिण्यो लक्ष्मीलक्षणसंयुताः ।
एवं ध्यानं महेशानि मन्त्रं वक्ष्यामि तेऽधुः २७

बीजषट्कं समुद्धृत्य नमो भगवतीति च ॥
महालक्ष्मि ततः पश्चात् नित्यकल्याणि तत्परम् ॥ २८

ततः सिद्धिं च मे देहि देहि स्वाहान्तको मनुः ॥
पुरश्चर्यार्णसाहस्रं तत्तल्लिपिसमं दिनम् ॥ २९

द्वात्रिंशत्कोष्ठके यन्त्रे तत्तन्मन्त्राक्षरान्विते ।
पञ्चाशदक्षरावीते तां तत्रावाह्य पूज्य(?) च ॥ ३०

जप्त्वा मूर्ध्नि महेशानि निवहेद्विश्वसिद्धये ॥ ३१

इति श्रीमहालक्ष्मीकल्पे नारायणब्रह्मोमामहेश्वर-
संवादे प्रत्यक्षसिद्धिप्रदे महालक्ष्मी -
रत्न (कल्प) कोशाख्ये
द्वात्रिंशोऽध्यायः ॥

## ॥ त्रयस्त्रिंशोऽध्यायः ॥

वाग्देवीब्रह्ममन्त्रस्य ऋषिर्व्यासः समीरितः ।
छन्दो गायत्रमाख्यातं देवते वाक्प्रजापती ॥ १

ऐं वीजं क्लीं ततः शक्तिः नमः कीलकमीरितम् ।
वागैश्वर्यप्रसिध्यर्थे विनियोगो वरानने ॥ २

त्रितारेण कुमार्या च मूलमन्त्रषडक्षरैः ।
अङ्गन्यासकरन्यासौ कुर्याद् विद्वान् समाहितः ॥ ३

हिमकाञ्चनसङ्काशं वीणां सितशुकं वरम् ।
अक्षमालां वामभागे अक्षसूत्रं कमण्डलुम् ॥ ४

ज्ञानमुद्रामभीतिं च दधतं दक्षिणे सदा ।
अष्टवाहुसमायुक्तं वागीश्वर्यर्धदेहिनम् ॥ ५

ध्यात्वा जपेन्महामन्त्रं वागैश्वर्यप्रसिद्धये ।
त्रितारं च कुमारीं च प्रणवं च नमः पदम् ॥ ६

व्रह्मणेति पदं प्रोक्त्वा( ?) द्वादशार्णो मनुर्भवेत् ।
त्रितारं प्रथमं प्रोक्त्वा कुमारीं च ततः परम् ॥ ७

ओं ह्रीं हौं इति संप्रोक्त्वा वह्नेः खण्डं समुद्धरेत् ।
नमः सौरं च संप्रोक्त्वा द्वितीयं खण्डमुद्धरेत् ॥ ८

ब्रह्मणेति पदं प्रोक्त्वा सोभखण्डं ततः परम् ।
धारणं मेऽस्त्विति प्रोक्त्वा अनिराकरणं ततः ॥ ९

धारयितेति संप्रोक्त्वा भूयासं च ततः परम् ।
कर्णयोः श्रुतमित्युक्त्वा माच्योद्वमिति संवदेत् ॥ १०

ममामुष्य पदं तारं सौः पदं मदनं परम् ।
वाग्भवं च श्रियं मायां वाग्भवं च समुद्धरेत् ॥ ११

पञ्चपञ्चाशदर्णोऽयं वाग्विभूतिप्रवर्तकम् ।
पुरश्चर्यार्णसाहस्रं धवलैः कुसुमैर्यजेत् ॥ १२

त्रिशतं वा जपेन्नित्यं अष्टेत्तरसहस्रकम् ॥
षण्मासेन महावाणी गद्यपद्यमयी भवेत् ॥ १३

वत्सरात्सर्ववेदार्थशास्त्राणां पारगो भवेत् ॥
त्रिवत्सराद्भवेदूर्ध्वं वागीश्वर इवापरः ॥ १४

तस्य दर्शनमात्रेण वादिनः सर्वतो दिशः ।
पलायन्ते यथाऽरण्ये सिह्मं दृष्ट्वा मतङ्गजाः ॥ १५

लभते द्वादशादब्दात् अणिमादिगुणान् बहून् ।
एवमादिगुणोपेतः सम्पदा धनदोपमः ॥ १६

इह भोगान् बहून् प्राप्य व्रजेद् ब्रह्मपदं सुधीः ।
बिन्दुत्रिकोणषट्कोणवसुकोणवसोर्दलैः ॥ १७

त्रयोदशकलापत्रैः भूपुरेण समन्वितम् ।
बिन्दुमारभ्य देवेशि कलान्तं मूलवर्णकम् ॥ १८

लिखित्वा भूपुरद्वन्द्वे मातृकां विलिखेत्ततः ॥
प्राणप्रतिष्ठासंयुक्तं धारयेद्यो यथाविधि ॥ १९

बुद्ध्या बृहस्पतिसमो जायते नात्र संशयः ।
एतद्गोप्यतरं देवि तव स्नेहात्प्रकीर्तितम् ॥ २०

इति श्रीमहालक्ष्मीकल्पे नारायणब्रह्मोमामहेश्वर-
संवादे प्रत्यक्षसिद्धिप्रदे महालक्ष्मी -
रत्न (कल्प) कोशाख्ये
त्रयस्त्रिंशोऽध्यायः ॥

## ।। चतुस्त्रिंशोऽध्यायः ।।

उमामहेशमन्त्रस्य ऋषिरानन्दभैरवः ।
वामदेवोऽमृतः प्रोक्तो गायत्रीछन्दसी स्मृते[1] ॥ १

उभौ च देवता(?) प्रोक्तौ हौं वीजमिति संस्मृतम् ।
ह्रीं शक्तिः प्रीतये योगः सर्वसौभाग्यसिद्धये ॥ २

त्रितारीं च कुमारीं च श्रीमहात्रिपुरेति च ।
सुन्दरीं ह्रां(हौं) च संप्रोक्त्वा सर्वज्ञायै ततः परम् ॥ ३

ओं ह्रीं हौं सर्वशक्तिधाम्नेति हृदयं न्यसेत् ।
सुन्दर्यन्तं समुद्धृत्य मायां नित्यपदं वदेत् ॥ ४

तृप्तायै ओं श्रीं ह्रीं समुच्चार्य नकारं बिन्दुसंयुतम् ।
नित्यतृप्तपदं प्रोक्त्वा शक्तिधाम्नेति संवदेत् ॥ ५

शिवाय नम इत्युक्त्वा शिरसि न्यासमाचरेत् ।
सुन्दर्यन्तं समुद्धृत्यानादिबोधपदं वदेत् ॥ ६

शक्तिधाम्ने पदं प्रोक्त्वा मशिवायनयेमहिं[2] ।
शिखायां विन्यसेद्धीमान् शिखामन्त्रेण मन्त्रवित् ॥ ७

सुन्दर्यन्तं समुच्चार्य स्वतन्त्रायै पदं वदेत् ।
ओं ह्रीं स्वतं समुच्चार्य त्रित्वशक्तिं ततो वदेत् ॥ ८

---

1. गायत्रीद्वयस्यापि छन्दस्त्वम् । षष्ठेश्लोके मन्त्रोद्धारोऽपूर्ण इव भाति ॥
2. मशिवायिन संवदेत् ॥

धाम्ने नमःशिवायेति कवचं विन्यसेत्कविः ।
सुन्दर्यन्तं समुच्चार्य अलुप्तायै पदं वदेत् ॥ ९

ओं ह्रीं वा च समुच्चार्य अलुप्तत्वपदं वदेत् ।
शक्तिधाम्ने यनमः प्रोक्त्वा मशिवागुणचक्षुषि ॥ १०

सुन्दर्यन्तं समुच्चार्य अनन्तायै पदं वदेत् ।
ओं ह्रीं यं अनमुच्चार्य तत्वशक्ति ततो वदेत् ॥ ११

धाम्नेति वायनमशि प्रोक्त्वास्त्रं विन्यसेन्नरः* ॥ १२

तप्तहेमवर्णमौक्तिकप्रबन्धनप्रभं
पाशमङ्कुशंवरं सुवर्णकुम्भमप्यथ ।
एणशाबवह्न्यभीतिधारिणं सुधाघटं
भावयामि भाग्यदं श्रिया उमामहेश्वरम् ॥ १३

ध्यानभेदं प्रवक्ष्यामि तच्छृणुष्व वरानने ॥ १४

कल्पद्रोःपादमूले मणिगणखचिते चक्रदेव्यग्रकोणे
श्रीकण्ठोत्सङ्गसङ्गत्स्मरललितवपुस्तप्तकार्तस्वराङ्गी ।
पीनोत्तुङ्गस्तनाढ्याऽऽभरणशतयुता कान्तिसीमान्तसिन्धुः ।
पायात्पाशाङ्कुशश्रीमदनशरशरासात्तहस्ता भवानी ॥ १५

श्रीं ह्रीं क्षों ओं नमः प्रोक्त्वा शिवायै ह्रीं श्रियं तथा ।
नमः शिवाय उक्त्वान्ते षोडशार्णमितिस्मृतम् ॥ १६

---

* ओं ऐं ह्रीं श्रीं ऐं क्लीं सौः श्री महात्रिपुरसुन्दर्यै ह्रां सर्वज्ञायै ओं ह्रीं ह्रौं सर्वज्ञशक्ति धाम्ने हृदयाय नमः । ओं 6 श्री महात्रिपुरसुन्दर्यै ह्रीं नित्य तृप्तायै ओं (श्रीं) ह्रीं नं नित्य तृप्तिशक्ति धाम्ने शिवाय नमः शिरसे स्वाहा । ओं 6 ........ हूं अनादि —— ओं ह्रीं मं अनादि - धाम्ने मशिवायन शिखायै ॥ एव मुत्तरत्राप्यूह्यम् ।

अथान्यदपि वक्ष्यामि सर्वसिध्येककारणम् ।
त्रितारीं च कुमारीं च ओं ह्रीं हौमिति संवदेत् ॥ १७

वह्निखण्डं नमः सौरं शिवाय पदमुच्चरेत् ।
सौम्यं सौ ऋश्यु[1] मिति मन्त्रं समुद्धरेत् ॥ १८

चतुर्दशाक्षरं मन्त्रं सर्वसिद्धिप्रदायकम् ।
श्रीषोडशार्णमन्त्रस्य तुल्यमेतत्सुरेश्वरि ॥ १९

धर्मार्थकाममोक्षाणां कारणं विश्वकारणम् ।
लक्षं जपेन्महामन्त्रं ततः सिद्धिर्भवेन्मनोः ॥ २०

तत्परं सर्वकर्माणि साधयेत्साधकोत्तमः ।
एवं मन्त्रं महादेवि मन्त्रदीक्षापुरःसरम् ॥ २१

गृह्णीयाद्गुरुणा दत्तं ततो[2] ष्येण समन्वितम् ।
मासान् परीक्ष्य तत्पश्चाद्दीक्षां कुर्याद्विचक्षणः २२

एतस्य मन्त्रराजस्य न हि मित्रारिशोधनम् ।
तथाप्यवश्यं कर्तव्यं मासशोधनमादरात् ॥ २३

असिद्धिर्भूमिसम्पत्तिर्मरणं बन्धुनाशनम् ।
आयुर्वृद्धिः प्रजानाशः सुसम्पद्रत्नसम्पदः ॥ २४

शुभप्राप्तिः स्थाननाशो ह्यमोघार्थो वशीकृ ।
एवं चैत्रादिमासानां फलमाहुर्मनीषिणः ॥ २५

---

1. उद्धारो न स्पष्टः । 2. शोधनार्हः पाठः ।

कोष्ठं षोडशकं कृत्वा अक्षराणि लिखेत्क्रमात् ।[1]
पूर्वे अकथहेत्युक्त्वा द्वितीये उड्प स्मृतः ॥

अखदल तृतीये स्याच्चतुर्थे उच्छ्रप स्मृतः ।
पञ्चमे वासवेत्युक्त्वा षष्ठे इलों स उच्यते ॥

सप्तमे औषधः प्रोक्तश्चाष्टमे लों तु यः स्मृतः ।
नवमे ईधने प्रोक्तर्दशमे ऋषभः स्मृतः ॥

इगधक्षस्त्वेकादशे ऋ छ (?) द्वादशे स्मृतः ।
ह्ः तसः त्रयोदशके ऐलश्यश्च चतुर्दशे ॥

ओं णषः पञ्चदशके षोडशे ऐठरःस्मृतः ।
एवं संलिख्य विधिवत् सिद्धसाध्यादि शोधयेत् ॥

नामाद्यक्षरमारभ्य यावन्मन्त्रादिदर्शनात् ।
सिद्धं साध्यं स्वसिद्धारि चतुष्कोणे चतुश्चतुः ॥

सिद्धसिद्धो यथोक्तेन द्विगुणात् सिद्धसाध्यकः ।
सिद्धसुसिद्धोऽर्धजपात् तत्साध्यः साधिकाज्जपात् ॥

सुसिद्धस्तत्क्षणादेव तदरिर्ज्ञातिहा भवेत् ।
अरिसिद्धः सुतं हन्यात् अरिसाध्यस्तु कन्यकाम् ॥

अरिःस्वसिद्धः पत्नीघ्नः आत्मानं हन्त्यरेररिः ।
तस्मात्परीक्ष्य देवेशि गृह्णीयान्मन्त्रमुत्तमम् ॥

---

+ इत आरभ्य सिद्धादिकोष्ठ निर्णायकश्लोकेषु असमीचीनता दृश्यते । यथानातृकं प्रकाशितम्

आत्मनाम द्विगुणितं देवतानामसंयुतम् ।
सप्तभिर्हरते भागं शेषं मन्त्री ऋणं भवेत् ॥(?) ३५

स्वामिनाम द्विगुणितं आत्मनाम्ना च संयुतम् ।
सप्तभिर्हरते भागं शेषं मन्त्री ऋणी भवेत् ॥ ३६

एतद्गुह्यतमं गौरि ज्ञात्वा मन्त्रगृहं परम् ।
सोमवारे शुक्रवारे सुसम्पत्क्षेमसाधके ॥ ३७

मैत्रे परममैत्रे वा मन्त्रदीक्षां समाचरेत् ।
यथावरणमार्गेण पूजां कृत्वा विचक्षणः ॥ ३८

एवं संपूज्य पूजान्ते शिष्यमाहूय सद्गुरुः ।
स्वर्णपुष्पैरर्चयित्वा देवतां तु प्रणामयेत् ॥ ३९

शङ्खतोयेन संप्रोक्ष्ये पुरतः स्थापयेत्ततः ।
स्वयं विष्णुमयो भूत्वा निःसन्दिग्धमना गुरुः ॥ ४०

निजहस्तेन शिष्यस्य समन्त्रं मूर्ध्नि संस्पृशेत् ।
स्पर्शदीक्षेति सा प्रोक्ता मलत्रयविमोचनी ॥ ४१

इत्थं विशुद्धचित्तस्य दक्षिणश्रोत्रमूलतः ।
तत्तद्बीजसमायुक्तं मूलमन्त्रं वदेद्गुरुः ॥ ४५

बीजादिकं विना देवि स्त्रीवर्णानां प्रदीयते ।
वामकर्णोपदेशः स्यात् एवं दीक्षा उदाहृता ॥ ४६

इत्थं प्राप्तोपदेशस्तु पूजयेद् द्रविणैर्गुरुम् ।
संभूष्य भूषणैर्वस्त्रैःस्वस्य शक्तिं अवञ्च्य च ॥ ४७

अनुज्ञातस्तु गुरुणा प्रयोगान्साधयेत्ततः ॥ ४८

भूकोणमध्ये द्विचतुर्थरेखा -
स्वस्नं समालिख्य तु तत्र नाम ।
वीजेन युक्ता अथ ऊर्ध्वकोष्ठे
सं व्हारमायत्तक्र पञ्चकेन ॥ (?) ४९

तत्कोणमध्यस्थितचन्द्रबीजं
खण्डद्वये तत्र मकारकं च ।
कोष्ठेषु लक्ष्मीपतिमन्त्रयुक्तं
पुत्रप्रदं भूतनिवारणं च ॥ ५०

अस्य षोडशवर्णस्य अन्ते यत्पञ्चवर्णकम् ।
तस्य प्रयोगं वक्ष्यामि समाहितमनाः श्रृणु ॥ ५१

वश्ये तु बिल्वफलके पञ्चविंशतिकोष्ठके ।
तृतीयं च चतुर्थं च द्वितीयं पञ्चमाद्यकम् ॥ ५२

पञ्चाक्षरक्रमेणैव विलिखेत्तदनन्तरम् ।
पञ्चमाद्यं चतुर्थं च तृतीयं च द्वितीयकम् ॥ ५३

द्वितीयं च चतुर्थं च पञ्चमाद्यं तृतीयकम् ।
तृतीयं पञ्चमाद्यं च द्वितीयं च चतुर्थकम् ॥ ५४

एवं क्रमेण विलिखेदुक्तपङ्क्तौ विशेषतः ।
तालपत्रे समालिख्य स्वर्णपात्रे ससाध्यकम् ॥ ५५

चतुर्दशसहस्रं वै जपेन्मन्त्रं समाहितः ।
चक्रं तु विलिखेत्पूज्य पत्रं प्राच्यां दिशि न्यसेत् ॥ ५६

मोहने प्लक्षफलके पञ्चविंशतिकोष्ठके ।
पञ्चाक्षरक्रमेणैव विलिखेदूर्ध्वकोष्ठके ॥ ५७

पञ्चमाद्यं चतुर्थं च तृतीयं च द्वितीयकम् ।
तृतीयं च चतुर्थं च पञ्चमाद्यं द्वितीयकम् ॥ ५८

तृतीयं पञ्चमाद्यं च द्वितीयं च चतुर्थकम् ।
चतुर्थं च तृतीयं च द्वितीयं पञ्चमाद्यकम् ॥ ५९

एवं क्रमेण विलिखेत्पङ्क्तौ पङ्क्तौ विशेषतः ।
तालपत्रे विलिख्यैवं पूर्ववत्साध्यनामकम् ॥ ६०

लशुनं सर्षपं हिङ्गुमरीचं च वचान्वितम् ।
पेषयित्वा लेपयित्वा चुल्लमूले न्यसेद्बुधः ॥ ६१

दक्षिणाभिमुखो जप्त्वा चतुर्दशसहस्रकम् ।
विद्वेषे तिल्लफलके पञ्चविंशतिकोष्ठके ॥ ६२

यनशिवाम इत्युक्त्वा मशियनततोऽमृतम् (वा) ।
शिवाय नम इत्युक्त्वा शिमवायन एव हि ॥ ६३

नमः शिवाय एवं वै पङ्क्तौ पङ्क्तौ लिखेत्क्रमात् ।
नैर्ऋत्याभिमुखो जप्त्वा चतुर्दशसहस्रकम् ॥ ६४

यन्त्रं तु चन्दनालिप्तं खनेदेतच्चतुष्पथे ।
उच्चाटने तु पालाशे पञ्चविंशतिकोष्ठके ॥ ६५

मंशिवायनामृतं प्रोक्त्वा नमःशिय व एव हि ।
शिवाय नम इत्युक्त्वा नमः शिवाय एव हि ॥ ६६

य नमः शिवा च इत्येवं पङ्क्तौ पङ्क्तौ लिखेत्क्रमात् ।
चतुर्दशसहस्रं तु जपेद्वायव्यदिङ्मुखः ॥ ६७

तालपत्रे विलिख्यैवं सर्षपेण विलेपयेत् ।
शास्तुरायतने चैतद्गजपादे खनेद्बुधः ॥ ६८

आकर्षणे तु न्यग्रोधे पञ्चविंशतिकोष्ठके ।
नशिवनमृतं प्रोक्त्वापि यनमशिव एव हि ॥ ६९

नमः शिवाय इत्युक्त्वा शिवामयन एव हि ।
वायनमशि संप्रोक्त्वा पङ्क्तौ पङ्क्तौ लिखेत्क्रमात् ॥ ७०

तालपत्रे विलिख्यैवं श्वेतलिप्ते ससाध्यकम् ।
पश्चिमस्यां स्थितो जप्त्वा चतुर्दशसहस्रकम् ॥ ७१

चक्रं तु विधिवत्पूज्य पत्रं पादे खनेद्बुधः ।
पाटले स्तम्भनं प्रोक्तं पञ्चविंशतिकोष्ठके ॥ ७२

न वा शियन इत्युक्त्वा वाशियनम चेति च ।
शियनमामृतकं प्रोक्त्वा य नमाशिव संवदेत् ॥ ७३

न म वाशिय इत्युक्त्वा पङ्क्तौ पङ्क्तौ लिखेद्बुधः ।
यशिवामन इत्युक्त्वा शिवामयन एव हि ॥ ७४

वाननयशि संप्रोक्त्वा मनायशि तथामृतम् ।
यनशिवाम इत्येवं पङ्क्तौ पङ्क्तौ लिखेत्क्रमात् ॥ ७५

उदङ्मुखो जपेन्मन्त्री चतुर्दशसहस्रकम् ।
तालपत्रे श्यामलिप्ते विलिख्यैतत्साध्यसंयुतम् ॥ ७६

पुनः सन्छादि(?) लिप्तं तत्पुत्रदीपे प्रदीपयेत् ।
औदुम्बरे च विलिखेत्पञ्चविंशतिकोष्ठके ॥ ७७

तालपत्रे समालिख्य पूर्ववत्साध्यनामकम् ।
अङ्गारे मरिचालिप्त्वा(?) कालीपीठे खनेद्बुधः ॥ ७८

भेदनेऽश्वत्थफलके पञ्चविंशतिकोष्ठके ।
वायनमशि संप्रोक्त्वा शिवामयन एव हि ॥ ७९

नमः शिवाय संप्रोक्त्वा यनशिवाम एव हि ।
मशियनामृतं देवि पङ्क्तौ पङ्क्तौ क्रमाल्लिखेत् ॥ ८०

अग्नेयाभिमुखो जप्त्वा चतुर्दशसहस्रकम् ।
लशुनं सर्षपं हिङ्गुमरीचवचसंयुतम् ॥ ८१

एतत्सर्वं च संपिष्य तालपत्रे विलेपयेत् ।
साध्यनामान्वितं पत्रं श्मशाने निखनेद्बुधः ॥ ८२

अष्टकर्म समाख्यातं इत्थं देव्यवधारय ।
पुनश्चक्रान्तरं वक्ष्ये भुक्तिमुक्तिफलप्रदम् ॥ ८३

चतुः प्रस्थान्वितं भस्म प्रस्तार्य तु विचक्षणः ।
चतुर्विंशतिकोणोक्तं लिखेद्भूपुरषट्ककम् ॥ ८४

रेखान्तरावकाशं तु द्व्यङ्गुलं परिकीर्तितम् ।
षड्विंशत्यङ्गुलाकारं चक्रमध्यमुदाहृतम् ॥ ८५

विदिक्षु चक्रराजस्य शतकोष्ठानि संलिखेत् ।
पञ्चविंशतिकोष्ठानि प्रत्येकं कोणतो लिखेत् ॥ ८६

कोष्ठान्येवं समालिख्य रेखाग्रे शूलमालिखेत् ।
रेखाग्रे विलिखेद् धीमान् श्रीबीजं तु महेश्वरि ॥ ८७

आग्नेयकोणकोष्ठेषु ऊर्ध्वपङ्क्तिषु पञ्चसु ।
शिवायनम इत्येवं लिखेद्वामक्रमाच्छिवे ॥ ८८

मशिवायन संलिख्य नमः शिवाय तत्परम् ।
य नमःशि वा च तत्पश्चाद्वायनमशि एव हि ॥ ८९

तस्मात्पश्चिमकोष्ठोर्ध्वपङ्क्तौ प्रागादितक्रमात् ।
मनयवाशि संलिख्य नयमशिवा एव हि ॥ ९०

यवाशिमन तत्पश्चात् वाशिमनय एव हि ।
शिमनयामृतं लिख्य पङ्क्तौ पङ्क्तौ यथाक्रमात् ॥ ९१

चक्रस्योत्तरदिग्भागे दक्षिणाभिमुखः स्वयम् ।
वायव्यपञ्चवीथीषु दक्षिणस्यामुपक्रमः ॥ ९२

यमवानशि संलिख्य शियमवान एव हि ।
नशियमामृतं लिख्य वानशियम एव हि ॥ ९३

शिवानमय संलिख्य पङ्क्तौ पङ्क्तौ यथाक्रमात् ।
ईशान्यपञ्चवीथीषु विलिखेदुत्तरामुखः ॥ ९४

दक्षिणं विलिखेद्वीथ्यां पश्चिमारम्भमार्गतः ।
शिनवामय संलिख्य नवामयशि तत्परम् ॥ ९५

वामयशिन तत्पश्चात् यमशिनतथा ऽमृतम् ।
यशिनवाम तत्पश्चात् पङ्क्तौ पङ्क्तौ लिखेत्क्रमात् ॥ ९६

चक्रस्यैकं चतुर्दिक्षु कोष्ठमात्रं विसृज्य तु ।
वाङ्माया श्रीःस्वयंलक्ष्मीकामकन्याष्टमातृकाः ॥(?) ९७

शिष्टषोडशकोष्ठेषु लिखेद्धरिहरात्मकम् ।
विभज्य पद्मयुग्मं तदेकमेव स्थितं न्यसेत् ॥ ९८

चक्रस्य मध्यकोष्ठेषु अधस्ताद् द्व्यङ्गुलं त्यजेत् ।
तदूर्ध्वं भूतविम्वानि विलिखेच्च यथाक्रमात् ॥ ९९

एवं मध्ये मूलवर्णानेकैकं क्रमतो लिखेत् ।
जलस्थपदमध्ये तु मायाबीजं समालिखेत् ॥ १००

तया चत्वारि संवेष्ट्य भूम्यादौ पञ्चमस्वरम् ।
भूतानि भित्त्वा तेनैव तदन्ते यं च मं लिखेत् ॥ १०१

अक्ष्णोः स्थाने चतुर्थः स्यात्कर्णयोः प्रथमं लिखेत् ।
तदधस्तात् द्वितीयं च भूतानि जलबिम्बतः ॥ १०२

दीर्घेनाप्यनुलोमेन प्रतिलोमेन वेष्टयेत् ।
चतुर्दिक्षु च दिक्पालान् विलिखेत्साधकोत्तमः ॥ १०३

स्मशानं चैव संहारमुन्मत्तं सुन्दरात्मकम् ।
विलिखेद् बीजरूपाणि चक्रं सर्वार्थसाधकम् ॥ १०४

गोप्यमेतन्महादेवि मूर्खायाप्रणताय च ।
लुब्धाय गर्वयुक्ताय पाषण्डायाप्यधर्मिणे ॥ १०५

गुरुभक्ताय शान्ताय सम्यक्सन्धाय धीमते ।
प्रकाशयेन्महादेवि अन्यथा दोपमाप्नुयात् ॥ १०६

दर्शनाच्च महादेवि भुक्तिं मुक्तिं समश्नुते ।
संमोहनादिचक्राणि सर्वाण्यत्रैव जायते(?) ॥ १०७

चिन्मूर्त्यादिमनुश्चाद्य भवेद् ज्ञानप्रदायकाः ॥(?) १०८

इति श्रीमहालक्ष्मीकल्पे नारायणब्रह्मोमामहेश्वर-
संवादे प्रत्यक्षसिद्धिप्रदे महालक्ष्मी -
रत्न (कल्प) कोशाख्ये
चतुस्त्रिंशोऽध्यायः ॥

## ॥ पञ्चत्रिंशोऽध्यायः ॥

श्रीभूवराहमन्त्रस्य ऋषिर्भृगुरुदीरितः ।
छन्दस्तु जगती प्रोक्ता श्रीभूवराह देवता ॥ १

ओं बीजमाहुतिः शक्तिः भूः कीलकमितीरितम् ।
एकदंष्ट्राय देवेशि व्योमकेशाय तत्परम् ॥ २

तेजोऽधिपतये पश्चात् विश्वरूपाय तत्परम् ।
महादंष्ट्राय देवेशि प्रोक्त्वा पञ्चाङ्गमाचरेत् ॥ ३

करन्यासमनेनैव कुर्यान्मन्त्री यथाक्रमम् ।
जान्वधस्तप्तहेमाभं नाभ्यन्तं स्फटिकप्रभम् ॥ ४

कर्णान्तं तरुणादित्यनिभं मूर्धान्तमम्बिके ।
नीलभासं करैश्चक्रं शङ्खं खड्गं च खेटकम् ॥ ५

उपधानं च शक्तिं च धारयन्तं वराभयम् ।
तस्याङ्के संस्मरेद्देवीं दिव्याभरणभूषिताम् ॥ ६

उद्धृताङ्गीं वराहेण कृष्णेन शतवाहुना ।
महायज्ञवराहस्य हस्तन्यस्तपदाम्बुजाम् ॥ ७

अङ्के निषण्णामेकेन करेणालिङ्गितोरसम् ।
गण्डस्थले समाघ्रातां लज्जयावनताननाम् ॥ ८

श्यामलां फुल्लपद्माक्षीं फुल्लपङ्कजधारिणीम् ।
विश्वप्रपञ्चनिर्माणनिर्योपादानकारणाम् ॥ ९

सुरासुरादिसर्गस्य स्थावरस्य चरस्य च ।
जीवभूतां कृपारूपां साक्षिणीं सर्वकारणाम् ॥ १०

वराहरूपिणो विष्णोः पत्नीं तेनोद्धृतां महीम् ।
ध्यायेज्जपेदिमां विद्यां सर्वसौभाग्यदायिनीम् ॥ ११

त्रितारं प्रथमं प्रोक्त्वा वाग्भवं तदनन्तरम् ।
शिवशक्तिं तथा कामं क्षितिं मायां परामपि ॥ १२

तारं नमो भगवते वराहपदमुद्धरेत् ।
रूपायेति च संप्रोक्त्वा कामबीजं तथा रविम् ॥ १३

चन्द्रं स्मरं तथा हंसं शक्रं मायां च मन्मथम् ।
भूर्भुवस्वः पदं चैव स्वपदं पतयेति च ॥ १४

पराबीजं परं चापि मारं प्रोक्त्वा तथा हरिम् ।
मायां वाग्भवमुच्चार्य भूपतित्वं च मे पदम् ॥ १५

देहि दापय संप्रोक्त्वा वह्निजायान्तको मनुः ।
षट्पञ्चाशदक्षरोऽयं मन्त्रः सौभाग्यसिद्धिकृत् ॥ १६

लक्षं जप्त्वा तु कल्हारैर्होमं कृत्वा विचक्षणः ।
प्रतिष्ठां महतीं प्राप्य धनधान्यं समश्नुते ॥ १७

त्रिकोणं बिन्दुमध्यस्थं वसुकोणं दशारकम् ।
मन्वश्रं च कलापद्मं षट्पद्मं च ततः परम् ॥ १८

बीजद्वयेन मूलं तु लिखेदेतेन बुद्धिमान् ।
मातृकां भूमिरेखासु लिखेद्देवि समाहितः ॥ १९

भूवराहस्य मन्त्रोऽयं भोगभोग्यसुखप्रदः ।
एतच्छ्रीचक्रसदृशं वैभवेन महेश्वरि ॥ २०

सहस्रं प्रजपेन्नित्यं भूवराहं वरानने ।
चतुःसमुद्रपर्यन्तां भूमिं शास्तीह वर्षतः ॥ २१

भस्मन्येतन्महायन्त्रं लिखेज्जप्त्वा सहस्रकम् ।
विकिरेदूषरे क्षेत्रे सस्यपूर्णफलप्रदम् ॥ २२

सवास्त्वोषधयोऽत्रस्थाः फलन्ति सफला ध्रुवम् ।
संमन्त्र्य भूवराहेण संवपेदोषधीः शुभाः ॥ २३

ताः प्रयच्छन्ति सफला वाञ्छितं धान्यसञ्चयम् ।
देवि श्रीषोडशार्णेन तुल्यः सर्वफलप्रदः ॥ २४

भूवराहमुपासित्वा भूपतिः साधको भवेत् ॥ २५

इति श्रीमहालक्ष्मीकल्पे नारायणब्रह्मामामहेश्वर-
संवादे प्रत्यक्षसिद्धिप्रदे महालक्ष्मी -
रत्न (कल्प) कोशाख्ये
पञ्चत्रिंशोऽध्यायः ॥

## ॥ षट्त्रिंशोऽध्यायः ॥

महात्रिपुरसुन्दर्या दुर्वासा ऋषिरीरितः ।
छन्दो गायत्रमेव स्याद्देवता त्रिपुरेश्वरी ॥ १

वालाबीजत्रयं देवि बीजं शक्तिश्च कीलकम् ।
सर्वसौभाग्यसिध्यर्थे विनियोगो वरानने ॥ २

त्रितारीं च कुमारीं च महात्रिपुरसुन्दरी ।
ह्रां सर्वज्ञेत्यादिभिश्च षडङ्गन्यासमाचरेत् ॥ ३

ततः पद्मनिभां देवीं बालार्कतरुणारुणाम् ।
जपाकुसुमसङ्काशां दाडिमीकुसुमोपमाम् ॥ ४

पद्मरागप्रतीकाशां कुङ्कुमोदकसन्निभाम् ।
स्फुरन्मकुटमाणिक्यकिङ्किणीजालमण्डिताम् ॥ ५

कालालिकुलसंकाशकुटिलालकपल्लवाम् ।
प्रत्यग्रारुणसङ्काशवदनाम्भोजमण्डलाम् ॥ ६

कंचिदर्धेन्दु मकुटाललाटमृदुपट्टिकाम् ।
(चञ्चदर्धेन्दुसदृशललाटमृदुपट्टिकाम्)
पिनाकिधनुराकारसुभ्रुवां (वं) परमेश्वरीम् ॥ ७

आनन्दमुदितोल्लासलीलान्दोलितलोचनाम् ।
स्फुरन्मयूखसङ्घातविलसद्धेमकुण्डलाम् ॥ ८

सुगण्डमण्डलाभोगजितेन्द्वमृतमण्डलाम् ।
विश्वकर्मादिनिर्माणसूत्रसुस्पष्टनासिकाम् ॥ ९

ताम्रविद्रुमबिम्बाभरक्तोष्ठीममृतोपमाम् ।
मल्लिकामुकुलोद्बद्धदन्तपङ्क्तिविराजिताम् ॥ १०

सर्वद्वीपजम (य) द्धाषाजिह्वां मधुरभाषिणीम् ।
स्मितमाधुर्यविजितमाधुर्यरससागराम् ॥ ११

अनू (नौ) पम्यगुणोपेतचिवुकोद्देशशोभिताम् ।
कम्वुग्रीवां महादेवीं मृणालसदृशैर्भुजैः ॥ १२

धृतपाशाङ्कुशानिक्षुधुनुष्प (ञ्च) शरान्विताम् ।
विचनोत्पङ्क्ति किरण कण्ठसूत्र विराजिताम् ॥ १३

(विचलापङ्क्तिकिरण ________)

बाहुमूलेन केयूरकटकाद्यैः सुशोभिताम् ।
रक्तोत्पलदलाकारसुकुमारकराम्बुजाम् ॥ १४

रक्ताम्बुजनखज्योतिर्वितानितनभस्थलाम् ।
मुक्ताहारलतोपेतसमुत्पन्नपयोधराम् । १५

त्रिवलीवलिना युक्तमध्यदेशसुशोभिते (ताम्)
लावण्यसरिदावर्ताकारनाभिविराजिताम् ॥ १६

अनर्घ्यरत्नखचितकाञ्चीयुतनितम्बिनीम् ।
नितम्वविम्व दुर(वित)त रोमराजिविराजिताम् ॥ १७

कदलीनलिनस्तम्भसुकुमारोरुमीश्वरीम् ।
जग (लस) द्वृत्तसदापूर्णजानुमण्डलबन्धुराम् ॥ १८



+ समुन्नत

गूढगुल्फपदद्वन्द्वप्रपदाजितकच्छपाम् ।
लावण्यकेतकीतुल्यजङ्घायुगलमण्डिताम् ॥ १९

शङ्खारिस्वस्तिशङ्खाब्जध्वजाङ्कितपदद्वयाम् ।
तनुदीर्घाङ्गुलीभासं (स्वन्) नखराज (जि) विराजिताम् ॥ २०

ब्रह्मरुद्रशिरोरत्ननिघृष्टचरणाम्बुजाम् ।
शीतांशुशतसङ्काशकान्तिसङ्काशहासिनीम् (?) ॥ २१

लौहित्यजितसिन्दूर-जप(ा) दाडिमरागिणीम् ।
रक्तवस्त्रपरीधानां-पाशाङ्कुशकरोद्यताम् ॥ २२

रक्तपुष्पविनि (निवि) ष्टां तु रक्ताभरणभूषिताम् ।
कर्पूरशकलोन्मिश्रताम्बूलापूरितानननाम् ॥ २३

महामृगमदोद्दामकुङ्कुमारुणविग्रहाम् ।
सर्वश्रृङ्गारवेषाढ्यां सर्वाभरणभूषिताम् ॥ २४

जगदाह्लादजननीं जगद्रञ्जनकारिणीम् ।
जगदाकर्षणकरीं जगत्कारणकारणाम् ॥ २५

सर्वमन्त्रमयीं देवीं सर्वसौभाग्यसुन्दरीम् ।
महालक्ष्मीमयीं नित्यां परमानन्दमन्दिताम् (मन्थराम्) ॥ २६

एवं ध्यात्वा महालक्ष्मीं महात्रिपुरसुन्दरीम् ।
वाग्भवं भुवनेशीं च कमलां वाग्भवं पुनः ॥ २७

मदनं तद्वधूः शक्तिः तदन्तं बीजशालिनीम् ।
ऐन्द्रमाकाशबीजस्थमधस्ताज्ज्वलनाक्षरम् ॥ २८

माया बिन्दुयुजं ---- सर्वोपरि परा स्मृता ।
अयं वाग्भवखण्डः स्याद्वागैश्वर्यप्रवर्तकः ॥ २९

कामबीजं समुद्धृत्य रविचन्द्रं ततःपरम् ।
मन्मथं रविमुद्धृत्य शक्रं च भुवनेश्वरीम् ॥ ३०

कामबीजमयं देवि कामराज इति स्मृतः ।
पराबीजं परावर्णं मारवर्णं सुरेश्वरम् ॥ ३१

हल्लेखां वाग्भवं देवि पराखण्डमिति स्मृतम् ।
खण्डत्रयात्मको मन्त्रः शीघ्रसिद्धिप्रदायकः ॥ ३२

चतुर्विंशतिवर्णात्मा सर्वसौभाग्यदो नृणाम् ।
वाग्भवं कामराजं च पराबीजं सुरेश्वरि ॥ ३३

वह्निसूर्यसुधांशूनां तत्तत्खण्डेषु योजयेत् ।
अष्टादशाक्षरो मन्त्रः सर्वसिद्धिप्रदायकः ॥ ३४

खण्डत्रयान्ते देवेशि श्रीबीजं संप्रयोजयेत् ।
षोडशार्णमिति ख्यातं सर्वतन्त्रेषु पार्वति ॥ ३५

एतां श्रियं महालक्ष्मीं प्रवदन्ति विचक्षणाः ।
श्रीबीजसहिता विद्या श्रीविद्येति च कथ्यते ॥ ३६

एतस्याश्च महालक्ष्म्याः किञ्चिद्भेदः सुरेश्वरि ।
शरपाशाङ्कुशसृणिं धारयन्ती सुरेश्वरि ॥ ३७

(शरपाशाङ्कुधनुर्धारयन्ती सुरेश्वरि ।)

लक्ष्मीः पद्मद्वयधरा वरदाभयधारिणी ।
ज्ञेयात् (?) भेदो महालक्ष्म्यास्त्वेतस्यापि शुचिस्मिते ॥ ३८

उभयोश्चक्रमेकं स्यात् भेदश्चावरणक्रमः ।
पार्थक्येन समाख्यातं चक्रं श्रीचक्रमेव हि ॥ ३९

वाङ्मायाकमलाबीजैः पूजयेर (पूज्याःस्युः) सर्वमातरः (?) ।
त्रिपुरा त्रिपुरेशी च सुन्दरी पुरवासिनी ॥ ४०

श्रीर्मालिनी च सिद्धाम्बा महात्रिपुरसुन्दरी ।
प्रकटा च तथा गुप्ता तथा गुप्ततराः स्मृताः ॥ ४१

सम्प्रदायकुलोत्तीर्णनिगर्भाश्च रहस्यकाः ।
परापररहस्याश्च तथैवातिरहस्यकाः ॥ ४२

नवधा चक्रयोगिन्यो नामभिस्ताः समर्चयेत् ।
*अणिमां पश्चिमद्वारे लघिमां पश्चिमोत्तरे ॥ ४३

पूर्वद्वारे तु महिमामीशित्वाख्यां तु दक्षिणे ।
वशित्वाख्यां तु वायव्ये, प्राकाम्यामीशदेशके ॥ ४४

भुक्तिसिद्धिस्तथाग्नेये इच्छासिद्धिस्तु नैरृतौ ।
अधस्तात्प्राप्यसिद्धिस्तु[2] सर्वकामोर्ध्वतः प्रिये ॥ ४५

ब्रह्माणीं पश्चिमद्वारे माहेशीमथ चोत्तरे ।
ऐन्द्रीं च पूर्वद्वारे तु कौमारीं दक्षिणे तथा ॥ ४६

---

* लघिमासिद्धेः दिङ्निर्णयः चिन्त्यः

2. प्राप्तिसिद्धिस्तु

वैष्णवीमपि वायव्ये वाराहीमीशदेशके ।
चामुण्डां च तथाग्नेये महालक्ष्मीं तु नैरृते ॥ ४७

एवं क्रमेण देवेशि दशमुद्राप्रपूजनम् ।
महालक्ष्मीमहाचक्रे देवतास्त्वन्तरालके ॥ ४८

कथितास्ते महादेवी पूजनीया च तत्क्रमात् ।
शक्तिविद्येतिविख्याता त्रैलोक्यक्षोभकारिणी ॥ ४९

श्रीविद्या च द्विधा प्रोक्ता परा च त्रिपुरेश्वरी ।
परजीवात्मनोर्देवि न हि भेदोऽस्ति वस्तुतः ॥ ५०

सत्वाकृतिः परा ज्ञेया त्रिपुरा तामसात्मिका ।
गुणातीता परा ज्ञेया त्रिपुरा त्रिगुणात्मिका ॥ ५१

त्रिगुणेषु पुरेश्वर्याः सत्वावस्था सुरेश्वरि ।
अस्यास्तदानीं श्रीविद्या नाम पार्वति साधके ॥ ५२

जीवात्मरूपा त्रिपुरा श्रीपरब्रह्मरूपिणी ।
तस्मत्परेति विख्याता महालक्ष्मीर्वरानने ॥ ५३

ब्रह्मविष्णुमहेशानां स्वरूपा त्रिपुरा स्मृता ।
तत्तत्पत्नीति च प्रोक्ता मायारूपस्वरूपिणी ॥ ५४

यदा श्रीर्विष्णुपत्नीति गीयते मुनिसत्तमैः ।
तदा मायामयी ज्ञेया ततःश्रीब्रह्मरूपिणी ॥ ५५

ब्रह्म स्त्रीति न विज्ञेयं किं तु पुंरूपधृक् पुमान् ।
निर्गुणे सति नैवास्ति पुंरूपमपि मत्प्रिये ॥ ५६

ब्रह्मादेः कल्पितत्वात्तु ब्रह्मारूपं ततःप्रिये ।
किन्तु सद्वस्तु संप्रोक्तं ब्रह्मेति ब्रह्मवादिभिः ॥ ५७

ज्ञानं न निर्गुणेऽस्तीति ब्रह्म श्रीरूपधृक् प्रिये ।
तस्माद्वक्षःस्थले विष्णोः भाति सर्वात्मकस्य वै ॥ ५८

सर्वेषां हृदये देवी चिद्रूपा परसुन्दरी ।
हृत्पद्मे यत्सदा भाति तद्ब्रह्म प्रोच्यते बुधैः ॥ ५९

तस्माच्छ्रीः स्वप्रकाशा च परमानन्दरूपिणी ।
त्रिसी (महा) नित्या कला ज्ञेया हृत्कोकनदमध्यगा ॥ ६०

किन्त्वचिच्छ्रीमहाविष्णोः पर्यायं नाम सुन्दरि ।
मोहिन्या विष्णुरूपत्वान्मोहिनी विष्णुरुच्यते ॥ ६१

उभयोरैक्यसंसिद्धिर्ब्रह्मात्मैक्यमिति स्मृतम् ।
परायाश्चक्रकोणेषु पुरायां देवतार्चयेत्( ?) ॥ ६२

साध्यभावे त्रिपुरा परा विद्येति कीर्तिते ॥ (कीर्त्यते) ॥
एवं ज्ञात्वा जपेद् विद्वान् साधकश्च सुवेषधृक् ॥ ६३

कुङ्कुमारुणदेहस्तु रक्ताभरणभूषितः ।
ताम्बूलपूरितमुखो धूपगन्धसुगन्धितः ॥ ६४

पूरक्षोभ(द) दिग्धाङ्गो रक्ताभरणमाश्रितः ।
रक्तपुष्पावृतो मौनी रक्तगन्धानुलेपनः ॥ ६५

रक्तासनोपविष्टस्तु लाक्षारुणगृहस्थितः ।
सर्वश्टङ्गारवेषश्च त्रिपुरीकृतविग्रहः ॥ ६६

मनःसंकल्परक्तो वा साधकः स्थिरमानसः ।
वर्णलक्षं जपेद्विद्वान् त्रिपुराश्रीसमो भवेत् ॥ ६७

श्रीचक्रं पूर्ववल्लिख्य गोरोचनरजःकणैः ।
भूतले साध्यरूपं च लिख्य प्राणान् प्रतिष्ठ्य च (?) ॥ ६८

बद्ध्वा च क्षोभिणीमुद्रां विद्यामष्टशतं जपेत् ।
नियोज्य दहनाकारे चन्द्रसूर्यप्रभाकुले ॥ ६९

ततो विचलितापाङ्गामनङ्गशरपीडिताम् ।
प्रोज्ज्वलन्मदनोल्लासप्रचलज्जघनस्थलाम् ॥ ७०

शक्तिचक्रोज्ज्वलद्बीजप्रभावकवलीकृताम् ।
दूतीकृतस्वचारित्रभयाल्लज्जाननां शुभाम् ॥ ७१

आकृष्टहृदयान्नष्टधैर्यामुत्यक्तजीविताम् । (?)
नतप्राकारनिगल नदीयन्त्र सुरक्षिताम् ॥ (?) ७२

न चा (जाता) नुरागसन्धानवेपमानहृदम्बुजाम् ॥
मनोऽधिकमहामन्त्रपावनापहृतांशुकाम् ? ॥ ७३

विमूढामिव विक्षुब्धामिव भ्रान्तामिव स्थिताम् ।
लिखितामिव निश्चेष्टां सर्वज्ञां मूकवत्स्थिताम् ॥ ७४

विहस्तामिव संकीर्णामिवाकुलितमानसाम् ।
निलीनामिव निश्चेष्टामि — गतामिव ॥ ७५

भ्रममन्त्रानिलोद्धूतपत्रकामां नभःस्थले । (?)
भ्रमन्तीमानयेन्नारीं योजनानां शतैरपि ॥ ७६

अथवा मातृकां सर्वां लिखित्वा चक्रपाश्वर्वतः ।
धारयेद्बाहुमूले तु सावश्यं सर्वजन्तुषु ॥ ७७

तथैव परमेशानि स्वसंज्ञात्रप्र (मात्र) योगतः ।
चन्दनागरुकर्पूरैरजरामरतां व्रजेत् ॥ ७८

एवं देवि विधानेन रोचनागरुकुङ्कुमैः ।
लिखितं चक्रयोगेन यस्मिन्कस्मिन्नपि स्थितम् ॥ ७९

साध्यनाम्ना स्वनाम्ना तु चक्रस्यान्तर्विदर्भितम् ।
करोति सकलान् लोकानचिराद्दासवत्प्रिये ॥ ८०

मध्यंगतेन बीजेन महाकमलकात्मना ।
एवमेवमवष्टभ्य साध्यनामाक्षरं प्रिये ॥ ८१

षष्टिमप्यखिलैरेव चे(वे)ष्टयेन्मातृकाक्षरैः ।
हेममध्यगतं कृत्वा धारयेद्वामके भुजे ॥ ८२

शिखायामथ वस्त्रान्ते धारयेद्यत्र तत्र वा ।
करोति दासभूतं तु त्रैलोक्यं सचराचरम् ॥ ८३

चक्रं वज्राशनिःशस्त्रं वेतालं राक्षसं तथा ।
भूतप्रेतपिशाचानां वारणं चक्रनायकम् ॥ ८४

अनेन क्रमेण संदह्य पुरागान्नाम सुन्दरी ।
मध्ये चतुष्पथे वापि चतुर्दिक्षु नियामयेत् ॥(?) ८५

महान् कोलाहलस्तत्र ततो लोकस्य जायते ।
योषितां च विशेषेण विद्विष्टानामपीश्वरि ॥ ८६

एतां मध्यगतां पृथ्वीं सशैलवनकाननाम् ।
ततःसमुद्रपर्यन्तां ज्वलन्तीं चिन्तयेत्ततः ॥ ८७

षण्मासध्यानयोगेन जायते मदनोपमः ।
*दृष्ट्वैवालोकयेल्लोकान् दृष्ट्वैव कुरुते शिवम् ॥ ८८

दृष्ट्या संक्षोभयेन्नारीं दृष्ट्वैवापहरेद्विषम् ।
दृष्ट्या करोति वागीशं दृष्ट्या सर्वं विमोहयेत् ॥ ८९

दृष्ट्या चातुर्थिकादींश्च नाशयेद्विषमज्वरान् ।
एतत्रपूजितं रात्रौ चक्रं सिन्दूररञ्जितम् ॥ ९०

करोति महदाकर्षं दूरस्थामपि योषितम् ।
महादिक्षु विदिक्ष्वेवं यदा देवी प्रपूज्यते ॥ ९१

दिगनुक्रमयोगेन तदा सर्वं जगद् वशेत् ।
भूर्जपत्रे विलिख्यैतत् सर्वं निर्विवरोदरे ॥ ९२

रोचनागरुकाश्मीरैर्मध्ये_______ ।
विपुलं देशमथवा विगमं मण्डलं च वा ॥ ९३

चक्रमेतन्महाभागे पुरक्षोभणमुत्तमम् ।
अर्कक्षीरं कुङ्कुमं च दुर्धूरक (धत्तूरक) रसं तथा ॥ ९४

रोचारक्तकलाक्षारवीणामृगमदोत्कटम् ।
एकीकृत्वा चक्रमेतत् लिख्यते यस्य संज्ञया ॥ ९५

---

* आकर्षयेत्

तस्य चोरग्रहव्याधिरिपुहिंसादिकारणम् ।
यक्षराक्षसवेतालभूतप्रेतादिरूपिणाम् ॥ १६

लूतवृश्चिककीटानां काकिन्यादिग्रहोद्भवम् ।
भयं न विद्यते तस्य परमन्त्राभिचारजम् ॥ १७

नित्यं सन्धारणाद्देवि कालमृत्युजरादयः ।
न शक्ता हिंसितुं संयक् रोमैकमपि सर्वदा ॥ १८

इति श्रीमहालक्ष्मीकल्पे नारायणब्रह्मोमामहेश्वर-
संवादे प्रत्यक्षसिद्धिप्रदे महालक्ष्मी-
रत्न (कल्प) कोशाख्ये
षट्त्रिंशोऽध्यायः ॥

## ॥ सप्तत्रिंशोऽध्यायः ॥

सिद्धलक्ष्म्या महेशानि ऋषिर्ब्रह्मा समीरितः ।
छन्दो गायत्रमाख्यातं सिद्धलक्ष्मीस्तु देवता ॥ १

वाग्भवं कामराजं च परामुद्धृत्य साधकः ।
बीजं शक्तिं कीलकं च कुर्याद्देवि यथाक्रमम् ॥ २

वाङ्मायाकमलाकामं परां मायां च बीजकम् ।
अङ्गुलीषु न्यसेत्सप्त (सर्व) वर्णेन(?) करपृष्ठयोः । ३

मूर्धादिचरणं यावत् मन्त्रेण व्यापकं चरेत् ।
नेत्रान्तं पञ्चबीजानि विन्यसेत्सप्त (र्व) वर्णकम् ॥ ४

अस्त्रं कृत्वा महेशानि पश्चाद् ध्यायेन्महेश्वरीम् ।
तटित्कोटिसमप्रख्यां पीनोन्नतपयोधराम् ॥ ५

उद्यद्भानुसहस्राभां सर्वाभरणभूषिताम् ।
नानासुलक्षणोपेतां नानामण्डल(न) मण्डिताम् ॥ ६

मातुलिङ्गं गदां खेटमक्षमालां च बिभ्रतीम् ।
कौस्तुभं स्वर्णकुम्भं च पद्मयुग्मं वराभयौ ॥ ७

एवं ध्यात्वा जपेद्विद्यां लक्षमात्रं च साधकः ।
इह सिद्धिं समाश्रित्य देहान्ते श्रीपदं व्रजेत् ॥ ८

[1]वाङ्माया कमलामनोभवधरा एह्येहि सिद्धिप्रदे
चन्द्रश्रीतदनुद्धलक्ष्मि च जगत्सूते (त्यै) प्रपूर्य(र्व)न्नमः ।
सौःकामःकमला ततश्च भुवनाधीशा च वागीश्वरी
चाष्टाविंशतिवर्णको मनुरयं सर्वार्थसिद्धिप्रदः ॥ ९

[2]ना(वा) गादि पञ्च बीजानि तत्पश्चाज्जगदुच्यते ।
प्रसूतो (त्यै) मन (नम) एव स्याद् द्वादशार्णं महेश्वरि ॥ १०

सिद्धलक्ष्मीं महादेवीं ध्यायेच्छ्रीध्यानमार्गतः ।
बिन्दुत्रिकोणवस्वश्रनागकोणानि तत्परम् ॥ ११

मनुकोणं दशकोणं च मन्वश्रं भूपुत्रयम् ।
सिद्धलक्ष्मीमहाचक्रं शीघ्रसिद्धिप्रदायकम् ॥ १२

स्थितिचक्रविभेदेन प्रोक्तं सर्वार्थसाधकम् ।
श्रीचक्रे यादृशं देवि तादृशं वैभवैः परम् ॥ १३

श्रियाश्च सिद्धलक्ष्म्याश्च चक्रं त्रैलोक्यदुर्लभम् ।
पार्थक्योपासने देवि सिद्धलक्ष्म्याः प्रवच्मि ते ॥ १४

वाग्देवीं पार्वतीं भूमिं वह्निकोणे समर्चयेत् ।
योग (गा) सत्या च विमला ज्ञान (ना) बुद्धिः स्मृति र्धमा (र्धृतिः) ॥१५

---

1. ऐं ह्रीं श्री क्लीं सौः एह्येहि सिद्धिप्रदे सिद्धलक्ष्मि जगत्प्रसूत्यै नमः सौः क्लीं श्रीं ह्रीं ऐं इति मूल मन्त्रस्वरूपम् ॥
2. ऐं ह्रीं श्रीं क्लीं सौः जगत्प्रसूत्यै नमः इति मन्त्रान्तरम् ॥

...कोणेषु पूजयेत्पुरुषोत्तमम् ।
दशकोणेषु रत्यादिदशशक्तीर्यजेत्क्रमात् ॥ १६

मन्वश्रे पूजयेद्विद्वान् रेणुकादिचतुर्दश ।
दशारेषु यजेत्पश्चात् ऋध्यादिदशकं बुधः ॥ १७

सर्वसंक्षोभिणीमुख्या मन्वश्रेषु प्रबोध (प्रपूज) येत् ।
श्रियादिशाङ्करीमुख्या ब्राह्म्याद्याश्च प्रपूजयेत् ॥ १८

सप्तावरणकं चक्रं सर्वसिद्धिप्रदायकम् ।

देवी -

नमस्तेऽस्तु महादेव सर्वज्ञ करुणाकर ॥ १९

सृष्टिसंहारभेदेन चक्रमुक्तं त्वया पुरा ।
नोक्तं स्थितिमयं चक्रं सर्वचक्रोत्तमोत्तमम् ॥ २०

सिद्धलक्ष्मीमहाचक्रं स्थितिभेदमिति श्रितम् ।
तस्माद्वोप्यतरं चक्रं स्थितिचक्रं वद प्रभो ॥ २१

महादेव :-

श्रृणु भद्रे विशालाक्षि स्थितिचक्रक्रमं परम् ।
एतद्विज्ञानमात्रेण साधन (कः) स्थितिमाप्नुयात् ॥ २२

रहस्यत्वान्मया नोक्तं स्थितिचक्रं तवानघे ।
स्थितिचक्रं महाभागे दर्शनाद्भुक्तिमुक्तिदम् ॥ २३

वक्ष्यामि तव तच्चक्रं देवानामपि दुर्लभम् ।
विन्दुमध्यं (ध्ये) त्रिकोणं च वस्वश्रदशयुग्मकम् ॥ २४

मन्वश्रयुग्मं तद्बाह्ये तद्बाह्ये दशयुग्मकम् ।
मन्वश्रद्वितयं पश्चात् नागपत्रं कलादलम् ॥ २५

भूरेखात्रितयं पश्चात् चतुर्द्वारेषु (रैःसु) शेभितम् ।
वह्निकोणं समारभ्य सृष्टिमार्गेण संलिखेत् ॥ २६

एकोनविंशरेखाःस्युः स्थितिचक्रे महेश्वरि ।
एकं वह्निपुरे ज्ञेयं द्वितीयं वसुकोणके ॥ २७

दशकोणचतुष्कस्य मन्वश्राणां चं षोडश ।
अस्मिन् चक्रपुरे मर्म चतुःपञ्चाशदीरितम् ॥ २८

सन्धयस्तत्समाः प्रोक्ता मर्मवाह्यचतुर्थकः ।
त्रिरेखासङ्गमो मर्म, मर्म मर्मविदो विदुः ॥ २९

द्विरेखासङ्गतिः सिद्धिः सिद्धिव (म) त्यभिधीयते ।
एवमेवं महाचक्रं श्रीरूपं परमेश्वरि ॥ ३०

अष्टोत्तरशतं कोणं यस्मिन् श्रीचक्रनायके ।
यस्योपासनया विष्णुः स्थितिसिद्धिं समागतः ॥ ३१

यः पुमान् स्थितिचक्रे तु श्रियः सावरणार्चनम् ।
करोति सर्वलोकानां स्थितिकर्ता न संशयः ॥ ३२

अग्निवत्सर्वभक्षत्वे, तेजसा सूर्यसन्निभः ।
आह्लादत्वे सोमतुल्यः क्षमया धरणीसमः ॥ ३३

वाचस्पतिसमो देवि, कर्तत्वे (वक्तृत्वे) साधकोत्तमः ।
सर्वसंमोहकरणे स्त्रीपुंसां मदनोपमः ॥ ३४

सर्वैश्वर्ये महादेवि साक्षाद्वैश्रणोपमः ।
चण्डवायुसमो वेगे ज्ञाने मत्सदृशो भवेत् ॥ ३५

धर्माधर्मविवेके तु धर्मराजोपमो भवेत् ।
प्रजापतिसमः सृष्टौ स्थितौ विष्णुसमः स्मृतः ॥ ३६

संहारे रुद्रतुल्यश्च जायते स्थितिपूजकः ।
विषयाविषये दोषा नश्यन्ति वरवर्णिनि ॥ ३७

यथा कृष्णस्य दोषायाकल्पते संगमोहिनी ।
स्थितिः श्रीपूजकस्यापि तथा देवि न संशयः ॥ ३८

शक्तेस्तपांसि नश्यन्ति नह्यत्रास्ति तपःक्षयः ।
शक्तेर्वृद्धिर्भवेद्देवि तपांसि स्थितिपूजनात् ॥ ३९

किमत्र बहुनोक्तेन पूजकःश्रीमयो भवेत् ।
ईक्षणात् सर्वलोकानां स्थितिकर्ता च विष्णुवत् ॥ ४०

यत्रावलोक्यते तेन स्वर्णवृष्टिश्च तत्र हि ।
तस्माद्गोप्यतरं देवि स्थितिचक्रं परात्परम् ॥ ४१

न कस्यचिन्मया प्रोक्तं गोप्यत्वात्सुरवन्दिते ।
सृष्टिचक्रं च संहारचक्रमुक्तं परं तव ॥ ४२

स्थितिचक्रं मयानोक्तं गोप्यत्वात्तव सुव्रते ।
सिद्धलक्ष्म्या महाचक्रं प्रसङ्गे पृष्टवत्यसि ॥ ४३

ममप्राणा त्वम पिका (धिका) तस्मात्प्रोक्तः स्थितेःक्रमः ।
एतस्य चक्रराजस्य महिमा वर्णितुं मया ॥
न शक्यते महादेवि तस्माद्गोप्यतमं कुरु ।
वैभवं चक्रराजस्य वेत्ति नारायणो हरिः ॥

व्रह्माणं मां विना चक्रं को वा जानाति पण्डितः ।
इदानीं तु त्वया ज्ञातं गोपनीयं प्रयत्नतः ॥

श्रृणु भद्रे स्थितेःपूजाक्रमं सर्वोत्तरं भवेत् ।
विन्दौ तु पूर्ववत्प्रोक्तं सर्वज्ञा (द्या) श्च षट् त्व (प) रम् ॥

कामेश्वर्यादिनित्यानां षोडशं पूर्ववत्तु वा ।
त्रिकोणे वसुकोणे च दशयुग्मे च पूर्ववत् ॥

मन्वश्रप्रथमे देवि रेणुकादिप्रपूजनम् ।
पुनर्मन्वश्रके देवि दिक्पालान् वसुसंख्यकान् (?) ॥

भानुमारभ्य शुक्रान्तं पूजयेत्स्वस्वमन्त्रतः ।
दशकोणद्वये सर्वज्ञा त (द) यः सर्वसिद्धि तः (दाः) ॥

पुनर्मन्वश्रके देवि सर्वसंक्षोभिणीमुखाः ।
भद्रा रिक्ता तथाऽश्वत्था कामेश्वर्यादि कं(का)गुणं गुणाः ॥

वसि (शि) न्याद्य (द्याश्च) देवेशि पूजयेन्मनुकोणके ।
अनङ्गकुसुमाद्यष्ट नागपत्रेषु पूजयेत् ॥

+ कामाकर्षणका देवी (देव्यः) षोडशारेषु सुस्मिते ।
प्रथमायां यजेद् भद्रां (मुद्राः) ब्राह्म्याद्यष्ट द्वितीयके ॥

+ कामाकर्षणीमुख्या देव्यः

तृतीये चाणिमाद्याश्च सह [illegible]गजान् ।
सर्वदेवमयाकारः पूजनाद्देवि साधकः ॥ ५४

एतत्सर्वं तव प्रोक्तं स्थितिचक्रक्रमं प्रिये ।
सिद्धलक्ष्म्याः परं देवि क्रमान्मा नं (तं) गिकामनुः ॥ ५५

इति श्रीमहालक्ष्मीकल्पे नारायणब्रह्मोमामहेश्वर-
संवादे प्रत्यक्षसिद्धिप्रदे महालक्ष्मी -
रत्न (कल्प) कोशाख्ये सप्त-
त्रिंशोऽध्यायः ॥

## ॥ अष्टत्रिंशोऽध्यायः ॥

श्रीमातङ्ग्याश्च मन्त्रस्य मतङ्गो ऋषिरीरितः ।
छन्दोऽतिजगती प्रोक्ता(क्तं) देवता श्रीमतङ्गिणी(नी) ॥ १

वाक्कामो(मौ) बीजशक्ती च परा कीलकमुच्यते ।
त्रितारीं च कुमारीं च समुद्धृत्य च तारकम् ॥ २

नमो भगवति प्रोक्त्वा(?) श्रीमातङ्गेश्वरी रिति(ति च) ।
असर्वज्ञापि (सर्वज्ञायै च) संप्रोक्त्वा चाङ्गुष्ठाभ्यां नमो न्यसेत् ॥ ३

कामं मायां च कमलां तथा सर्वजनेति च ।
मनोहारि सर्वमुखरञ्जनी रक्तकं परम् ४

नित्यतृप्ता चतुर्थ्यन्तं तर्जनीभ्यां नमो न्यसेत् ।
परादित्रितयं प्रोक्त्वा श्रीमायां वाग्भवं ततः ॥ ५

सर्वराजपदं प्रोक्त्वा वशङ्करि पदं ततः ।
ऊँ चाप्यनादिबोधायै मध्यमाभ्यां नमो न्यसेत् ॥ ६

त्रितारीं च कुमारीं च उद्धृत्य परमेश्वरि ।
सर्वदुष्टमृगं चैव वशंकरि पदं ततः ॥ ७

सर्वसत्वपदं प्रोक्त्वा वशंकरि पदं ततः ।
ऐं स्वतन्त्राच्चतुर्थ्यन्तं अनामिका(भ्या)न्नमो न्यसेत् ॥ ८

कमलादि त्रयं प्रोक्त्वा सर्वलोकवशङ्करि ।
औमलुप्ता चतुर्थ्यन्तं कनिष्ठाकाभ्यां नमो न्यसेत् ॥ ९

पराद्विषट्कमुद्धृत्य अनन्तायै अपूर्वकम् ।
अमुकं मे वशं प्रोक्त्वा आनय स्वाहया न्यसेत् । १०

कर कु(पृ)ष्ठ द्वये न्यस्य षडं(गं) तदनन्तरम्
त्रितारं (त्रितारीं) हृदि विन्यस्य कुमारीं मूर्ध्नि विन्यसेत् ॥ ११

कामादित्रितयं देवि शिखायां विन्यसेद्बुधः ।
बालाविलोमतो देवि कवचं न्यस्य तत्परम् ॥ १२

कमलादित्रयं नेत्रत्रये न्यस्य त्रितारकम् ।
अस्त्रं न्यसेन्महादेवि हृदयादिक्रमाद् बुधः ॥ १३

दिव्यासनसमारूढां श्यामवर्णां शुचिस्मिताम् ।
इन्द्रनीलमणिश्यामां नवनीलोत्पलश्रियम् ॥ १४

रक्तांशुकपरीधानां यावकार्द्रपदाम्बुजाम् ।
कदम्बमाला(संनद्ध) वृत्ताबद्धशिरोरुहाम् ॥ १५

प्रलम्बालकसंयुक्तां चन्द्रलेखावतंसिनीम् ।
उल्लसद्घनतारुण्यसमुन्नतपयोधराम् ॥ १६

पीयूषोदधिसंभूतां कम्बुकुण्डलमण्डिताम् ।
विनम्रकामकोदण्डसौन्दर्यविजितभ्रुवम् ॥ १७

ललाटतिलकोपेतामीषद्विहसिताननाम् ।
किञ्चित्स्वेदाम्बुरचितललाटतिलकोज्ज्वलाम् ॥ १८

विम्बाधरस्मितज्योत्स्नाकपोलफलकोल्लसाम्( ?
लसत्करा(लसत्कुरङ्ग)बालाक्षीं नासाकलित मौ[illegible]म् ॥ १९

कम्बुग्रीवां विभक्ताङ्गीं नाभ्यावर्तविराजिताम् ।
वलीतरङ्गमध्यस्थरोमराजिविराजिताम् ॥ २०

पृष्ठदेशोल्लसत्काञ्चीविलसच्चलवेणिकाम् ।
सर्वाभरणशोभाढ्यां मुक्तादामविभूषिताम् ॥ २१

नूपुरे हंसकैश्चैवं कटिसूत्रैरलङ्कृताम् ।
वलयै रत्नखचितैः केयूरैर्मणिभूषणैः ॥ २२

भूषितां द्विभुजां बालां मदघूर्मि (र्णि) तलोचनाम् ।
वादयन्तीं सदा वाणी(वीणां) मत्तभावमतङ्गिनीम् ॥ २३

चतुः षष्टिकलारूपपार्श्वस्थशुकशारिकाम् ।
कोटिसूर्यप्रतीकाशां जपाकुसुमसन्निभाम् ॥ २४

अथवा पीतवर्णाभां श्यामामेवं परां प्रिये ।
एवं ध्यात्वा महामन्त्रं जपेत्साधकपुङ्गवः ॥ २५

वाङ्माया कमला पश्चात् कुमा(री) प्रणवस्ततः ।
नमो भगवति प्रोक्त्वा श्रीमातङ्गेश्वरीति च ॥ २६
सर्वान्तेऽथ जनमनोहारि सर्वमुखात्परम् ।
रञ्जनीत्ययमीशानि खण्डः प्रथम ईरितः ॥ २७

चतुस्त्रिंशन्महावर्णः सर्वाभीष्टफलप्रदः ।
कन्दर्पमाया कमला सर्वराजवशंकरि ॥ २८

सर्वस्त्रीपुरुषं प्रोक्त्वा वशंकरि पदं व्रजे(वदे)त् ।
सर्वदुष्टमृगं प्रोक्त्वा वशङ्करि पदं पुनः ॥ २९

सर्वसत्वपदं प्रोक्त्वा वशङ्करि पदं ततः ।
सर्वलोकपदं प्रोक्त्वा वशङ्करि पदं पुनः । ३०

अमुकं मे वशं प्रोक्त्वा आनयाग्नेश्च वल्लभा ।
अष्टपञ्चाशदर्णोऽयं द्वितीयः सर्ववश्यकृत् ॥ ३१

बालां विलोमतः कृत्वा त्रितारीं च तथा वदेत् ।
एष खण्डः तृतीयः स्यात्सर्पाणां दर्पनाशकृत् । ३२

अयम् अष्टनवत्यर्णः सर्वसिद्धिप्रदायकः ।
त्रिपुरामन्त्रतुल्योऽयं किमत्र बहुनो(धो)क्तितः ॥ ३३

इ(बि)न्दुचक्रं त्रिकोणं च बाणवस्वरसंयुतम्
कलादिक्पत्रसंयुक्तं चतुर्दलसमावृतम् ॥ ३४

भूरेखात्रयसंयुक्तं सर्वतः समरेखकम् ।
महामातङ्गिनीरूपं चक्रराजमिदं शिवे ॥ ३५

पार्थक्याया(पार्थक्योपा) सनायां तु वक्ष्याम्यावरणक्रमम् ।
बिन्दुमध्ये महादेवि वर्णशक्तीश्च तर्पयेत् ॥ ३६

ऐं कारीं ह्रीमतीं देवीं श्रीमतीं च महेश्वरीम् ।
क्लीं कारी सौभगा ओं स्वनी शक्तिर्नमोग्निका(?) ॥ ३७

मोहिनी भूतमाला च गगना वह्निवासिनी ।
तीव्रशक्तिः श्रीमती च मानदा तालगाथिका ॥ ३८

गेया श्वासनिवासी च रिपुसंहारकारिणी ।
सर्वमोहनकारी च वन्दारुजननी तथा ॥ ३९

नरकापहरा देवी मदनोन्मादिनी तथा ।
देवी नादनिका हंसवाहिनी रिपुनाशिनी ॥ ४०

सङ्गीतवाजिवाहा च मुखरञ्जनिका तथा ।
खादिनी (?) राजमोहिन्या जननी नियमेश्वरी ॥ ४१

क्लिन्न मद्रोषिणी(?) श्रीश्च सर्वगा वरदा तथा ।
रक्ता जया वश्यमुखी शाङ्करी कमलाक्षिणी ॥ ४२

रेचिका सर्वमोचाख्या वाग्देवी त्र्यम्बका तथा ।
...रुशक्तिः सत्स्वर्णवाञ्छितार्थप्रदायिनी ॥ ४३

शान्तिः कला ऋद्धिमती सानन्दा वटवासिनी ।
दुर्गा टंकधरा देवी मृगाक्षी गजवाहिनी ॥ ४४

वर्धिनी शर्वदयिता, कराली ...रिकल्मषा ।
सारङ्गवाहिनी देवी वसन्तश्रीर्वरानना ॥ ४५

सारब्धा त्वरिता देवी वत्सरा शठनायिका ।
कार्मुकी चेष्टहस्ता च सङ्ग्रामोग्रा वरानना ॥ ४६

लोला काममदोन्मत्ता वल्गिनी शकटासना ।
कपालिनी रेवती च अमृतेशी च मुण्डिनी ॥ ४७

...म्बुकण्ठी मेघनादा देवी चैव वच (घनस्वनी) स्विनी ।
शरभा चमरानाथदेवी यक्षिणिका तथा ॥ ४८

स्वाहा हाकिनिका चैव सौभगा क्लेदिनी तथा ।
श्रीविद्या हेषिणी देवी वैशी ... ॥ ४९

चतुर्थ्यन्तेन संपूज्याः सर्वाभीष्टफलप्रदाः ।
सङ्केतयोगिनी श्यामा श्यामला मन्त्रनायिका । ५०

मन्त्रिणी सचिवेशी च प्रधानेशी शुकप्रिया ।
नीपप्रिया कदम्वेशी, कदम्बवनवासिनी ॥ ५१

स ना(दा)मदा लघुश्यामा तथा वाग्वादिनी परा ।
अङ्गदेवी लघुश्यामा प्रत्यङ्ग वाक्स्वरूपिणी ॥ ५२

उपाङ्ग नकुलीदेवी, हसन्ती विघ्नदेवता ।
शुकश्च शारिका दीना तथा वेणुश्च यन्त्रिणी ॥ ५३

तन्त्रिणी विन्दुमध्यस्थाः पूजयेत्साधकर्षभः ।
वाग्भवा मनसोच्छिष्टचण्डालीति पदं ततः ॥ ५४

मातङ्गीति पदं पश्चात् तथा शर्वाय (सर्वव) शङ्करी ।
हुं फट् स्वाहेति मन्त्रः स्यात् लघुश्यामामयः प्रिये ॥ ५५

वाङ्मायां च समुद्धृत्य प(व)द प्रोक्त्वा पुनर्वद ।
वाग्वादिनी तु तत्पश्चात् स्वाहान्तं मन्त्रमुच्यते ॥ ५६

वाग्वादिनीमहामन्त्रं द्वादशार्णं महेश्वरि ।
त्रितारं प्रणवं प्रोक्त्वा नमो भगवतीति च ॥ ५७

महाशारिकेति ततः सकलेति पदं वदेत् ।
कलापदं समुद्धृत्य कोविदेति पदं ततः ॥ ५८

शीघ्रं बोधयेति युगं स्वाहान्तो मन्त्र उच्यते ।
शारिकाया महामन्त्रः शीघ्रबोधप्रदायकः ॥ ५९

कामंमायां श्रियं तारं नमो भगवते महा ।
शुकाय त्रैलोक्यवशं कराय च ततः परम् ॥ ६०

राजमदमर्दनाय देवीं शीघ्रं ममेति च ।
शय (वश) मानय संप्रोक्त्वा स्वाहान्तो मन्त्र उच्यते ॥ ६१

शुकस्य तु महामन्त्रः सर्वलोकवशङ्करः ।
तारं नमो भगवति महानादिनि तत्परम् ॥ ६२

सङ्गीतविद्यां संप्रोक्त्वा प्रयच्छ स्वाहया युतः ।
वेणुविद्या महामन्त्रः सद्यः साहित्यकृद्भवेत् ॥ ६३

(ओ)ष्ठाभि(पि) धान(ना) नकुली दन्तैः परिवृता पविः ।
सर्वस्यै वाच ईशान (ना) चारु मामिह पा(वा) दयेत् ॥ ६४

नकुल्याश्च महामन्त्रः शीघ्रबोधप्रवर्तकः ।
एवं विन्दौ समभ्यर्च्य पश्चादावरणेऽर्चयेत् ॥ ६५

कोणेऽभ्यर्चयेत् धीमान् रतिप्रीतिमनोभवः(वान्)
द्राविणी शोषिणी चैव बंधिनी मोहिनीति च ॥ ६६

उन्मादिनीति ताः पञ्च पञ्चकोणेषु पूजयेत् ।
कामराजं च कन्दर्पं मन्मथं मकरध्वजम् ॥ ६७

मनोभवं च पञ्चारकोणाग्रेषु यजेत्क्रमात् ।
ब्राह्मीं माहेश्वरीं चैव कौमारीं वैष्णवीं तथा ॥ ६८

वाराहीं चापि माहेन्द्रीं चामुण्डां चण्डिकां यजेत् ॥
अष्टकोणेषु संपूज्य पश्चात्तस्यान्तरालके ॥ ६९

लक्ष्मीं सरस्वतीं चैव रतिं प्रीतिं तथैव च ।
कीर्तिं शान्तिं च पुष्टिं च तुष्टिं संपूजयेत्क्रमात् ॥ ७०

वामां ज्येष्ठां च रौद्रीं च शान्तिं श्रद्धां सरस्वतीम् ।
क्रियाशक्तिं च लक्ष्मीं च सृष्टिं चैवाथ मोहिनीम् ॥ ७१

तथा प्रमथिनीं चापि शिनिध्रीं(?) च तथैव च ।
[1]विद्युन्माली सुरानन्द नागाख्य बुद्धिमान्(?) ॥ ७२

कलादलेषु संपूज्य दलेष्वष्टसु पूजयेत् ।
आशि(सि)तो रौरवश्चैव[2] चण्डः क्रोधस्तथैव च ॥ ७३

उन्मत्तश्च कपाली च भीषणो भय भैरवः
एवं संपूजयेद्देवि पश्चाद्वेददलेष्वपि ॥ ७४

मातङ्गीं सिद्धलक्ष्मीं च ते महापदपूजिते(?)
गणनाथं च दुर्गां च वटुकं क्षेत्रपालकम् ॥ ७५

चतुरस्रस्य रेखासु हंसमूर्तिं समर्चयेत् ।
परप्रकाशं तत्पश्चात् पूर्णानन्दमपि प्रिये ॥ ७६

---

1. वामां ज्येष्ठां च रौद्रां च शान्तिं श्रद्धां महेश्वरीम् ।
क्रियाशक्तिं च लक्ष्मीं च सृष्टिं चैवाथ मोहिनीम् ॥
प्रमथाश्वासिनीं विद्युल्लतां चिच्छक्तिमेव च ।
सुरानन्दा सुरानन्दे आनन्दाब्धिं च पूजयेत् इत्यन्यत्र ॥

2. असिताङ्गोरुरुश्चण्डः क्रोधनोन्मत्तभैरवौ ।
कपाली भीषणश्चैव संहारश्चाष्टमस्तथा इति भैरवाष्टकमन्यत्र वहुत्र ॥

नित्यानन्दं च वरुणं पूजयेत्क्रमतोऽनघे ।
सरस्वतीं तथा लक्ष्मीं शङ्खपद्मनिधी तथा ॥ ७७

चतुर्दिक्षु महेशानि पूजयेन्नियतव्रतः ।
तद्बहिर्लोकपालांश्च पूजयेद्दिक्षु तत्क्रमात् ॥ ७८

एवं मातङ्गिनीमन्त्रवैभवं तव वर्णितम् ।
इतः परं महादेवि भुवनेशीं श्रृणु प्रिये ॥ ७९

इति श्रीमहालक्ष्मीकल्पे नारायणब्रह्मोमामहेश्वर-
संवादे प्रत्यक्षसिद्धिप्रदे महालक्ष्मी -
रत्न (कल्प) कोशाख्ये अष्ट-
त्रिंशोऽध्यायः ॥

## + ॥ एकोनचत्वारिंशोऽध्यायः ॥

ऋषिर्ब्रह्मास्य मन्त्रस्य भुवनाधि (धीशित्र्याः) परम् ।
छन्दो गायत्रमेव स्याद्देवता भुवनेश्वरी । १

बीजं मायैव शक्तिश्च कीलकं परमेश्वरि ।
ह्रामित्यादिषडङ्गः स्यात् करन्यासं चरेत्ततः ॥ २

देव्या ध्यानं प्रवक्ष्यामि धर्मकामार्थमोक्षदम् ।
हृत्पद्मकर्णिकामध्ये सुखासीनां शुचिस्मिताम् ॥ ३

रक्तवर्णां सुप्रसन्नां सर्वाभरणभूषिताम् ।
त्रिणेत्रां चारुमकुटां चन्द्ररेखावतंसकाम् ॥ ४

हारनूपुरकेयूरस्तनावन्धविराजिताम् ।
रक्ताम्वरधरां रक्तखंतीं(रक्तरत्न) पीठोपरि स्थिताम् ॥ ५

मुक्तामाणिक्यवैडूर्योपेतक्वणितकाञ्चिकाम् ।
रक्तवन्धस्रजां चैव रक्तकुण्डलमण्डिताम् ॥ ६

विचित्ररत्नवद्भूषां विचित्रावयवां शिवाम् ।
पाशाङ्कुशधरां चैव वरदाभयधारिणीम् । ७

चामराभ्यां वीज्यमानां सितछत्रोपशोभिताम् ।
अनङ्गरूपनाम्ना च अनङ्गमदना तथा ॥ ८

---

+ [illegible] ॥

मदनातुरविख्याता वायुवेगा तथैव च ।
तथा भुवनपाला च सर्वशीला तथैव च । ९

अनङ्गवेदना चैव तथैवानङ्गमेखला ।
चषकं तालवृन्तं च ताम्बूलछत्रचामरैः । १०

शुकं च शारिकां पुष्पं धारयन्तीभिरावृताम् ।
इन्द्राद्यैर्लोकपालैश्च दिक्पालैरुपशोभिताम् ॥ ११

ब्राह्म्यादिशक्तिसहितैर्भैरवाद्यैश्च सेविताम् ।
जया च विजया चैव अजिता चापराजिता ॥ १२

नित्या विलासिनी चैव मौंडिनी चापि मौंडिनी(?) ।
एताभिर्वसुपत्रेषु संस्थिताभिश्च शोभिताम् ॥ १३

रक्ता चामुण्डिका भद्रा महामाया च सुन्दरी ।
एताभिश्च चतुर्दिक्षु सेवितां दिव्यभूषणाम् ॥ १४

गणेशं षण्मुखं चैव वटुकं क्षेत्रपालकम् ।
उपासनीयाः पार्थक्येनैवं ध्यायेन्महेश्वरीम् ॥ १५

एवं ध्यात्वा जपेन्मन्त्रं लब्ध्वा गुरुमुखाम्बुजात् ।
महाघोषं समादाय वह्निवर्णमतः परम् ॥ १६

मायाबीजं समुद्धृत्य बिन्दुं च तदनन्तरम् ।
उद्धरेन्मन्त्रमेवं तु मन्त्रराजमनुत्तमम् ॥ १७

आयुष्करं पुष्टिकरं श्रीचक्रं (श्रीप्रदं च) यशस्करम् ।
वाक्प्रवृत्तिकरं चैव सर्वकामार्थसाधकम् ॥ १८

चतुर्लक्षं जपेन्मन्त्रं पुरश्चरणसिद्धये ।
आज्येन जुहुयान्मन्त्री सहस्राणां चतुष्टयम् ॥ १९

ततः सिध्यत्यसन्देहः सर्वसम्पत्समृद्धिमत् ।
जपेच्च जुहुयादग्नौ बिल्वैराज्येन पङ्कजैः ॥ २०

अलक्ष्मीं नाशयित्वा तु श्रियं विन्दति साधकः ।
लक्षं जप्त्वा महेशानि सर्वलोकं वशं नयेत् ॥ २१

पुष्ययुक्तचतुर्दश्यां मध्याह्ने च सुरेश्वरि ।
रक्तपुष्पैर्महादेव्याः शक्तिपीठे च निक्षिपेत् ॥ २२

सहस्रेण समायाति राजकोशस्थितः स्वयम् ।
काकोलूकोद्भवैः पक्षैः स्नुह्यजक्षीर लेहि(लोलि) तैः ॥ २३

सप्ताहं जुहुयान्मन्त्री शताद्विद्वेषणं भवेत् ।
चतुर्लक्षं जपेन्मन्त्रं धर्मकामार्थसिद्धये ॥ २४

सप्तरात्रं त्रिसन्ध्यं च जपेदष्टसहस्रकम् ।
मनुष्या वशमायान्ति पुरुषाश्च स्त्रियस्तथा ॥ २५

राजा च नगरं ग्रामं स्त्रियश्च वरवर्णिनः(?) ।
लक्षत्रयजपाद्देवि पिशाचा ब्रह्मराक्षसाः ॥ २६

सिद्धं द्रव्यं प्रयच्छन्ति, भविष्यन्ति च किङ्कराः ।
लक्षैर्द्वादशभिर्जप्तैः जरामरणवर्जितः ॥ २७

लक्षैश्च पञ्चदशभिः मातरः सर्वकामदाः ।
नाभिदघ्ने जले स्थित्वा जपेदष्टचतुष्टयम् ॥ २८

रूपेण मारसदृशो भोगे हरिहयो भुवि ॥ २९

नागकन्या समागत्य भार्या च वरदा भवेत् ।
आयुष्ये ब्रह्मणा तुल्यः ऐश्वर्ये धनदोपमः ॥ ३०

भोगांश्च भुक्त्वा लोकेऽस्मिन् स्वर्गस्त्रीणां च वल्लभः ।
आयुष्यं विजयं वश्यस्तम्भनाकर्षणं तथा ॥ ३१

मोहनं मारणं चैव भवत्युच्चाटनं प्रिये ।
निधानं चक्षुषा पश्येत् समन्तादिह भूतले ॥ ३२

देवांश्च पश्यति श्रीमान् मन्त्रेणानेन मन्त्रवित् ।
साधयेदीप्सितं सर्वं नात्र कार्या विचारणा ॥ ३३

मृत्योरुद्वासनं चैव आकाशगमनं तथा ।
एवं देवेशि मन्त्रस्य वैभवं परिकीर्तितम् ॥ ३४

संख्यायोगफलं चक्रं भुवनेश्या वदाम्यहम् ।
प्राचीरेखा लिखेत्पञ्च तिर्यक्पञ्च तथा लिखेत् ॥ ३५

कोष्ठषोडशकं तत्र ज्ञातं कटपयादिभिः ।
राज्यं वीरो बली यज्वा भोगी गावो वयो रुरुः ॥ ३६

राज्ये अकक्षवर्णांश्च वीरे ईखळमेव च ।
बलिन्युगहसाध्यं च यज्वाऋघस वर्णकम् ॥ ३७

भोगी लृ च षवर्णांस्त्रीन् गाव एंच(छ)स(श)एव च ।
वयो ओजव संख्यांश्च रुरुः अं झल वर्णकम् ॥ ३८

एकाद्यष्टान्तकं ज्ञेयं स्थानेष्वेतेषु संलिखेत् ।
आद्येन लक्षते वीथीरुत्तरेण तथा गृहम् ॥ ३९

ध्रुवाष्टकमिदं चक्रं सर्वं (श्रेष्ठं) सर्वेषु कर्मसु ।
अर्धाकृत्या तु यद्दिष्टं एकोन क्रमशो लिखेत् ॥ ४०

भोगी लघु पटूगौरी लङ्का पुत्री खगो भुवि ।
भोगी आटर वर्णांस्त्रीन् र(ल) घुरं एव व च? ॥ ४१

पटु ऊखम वर्णाश्च गौरी क्रीडभ सिद्धये ।
लंका एतप इत्येव पुत्री एधापि संयुतम् ॥ ४२

खगो औदर साध्यं च भुविश्च अयनं ध्रुवम् ।
एतेष्वेवं मन्त्र वेषु(लिखेद्वर्णान्) मध्ये माया चतुर्ष्वपि ॥ ४३

पार्श्वद्वये लिखेद्देव्या बीजं सर्वेषु कर्मसु ।
साध्यनाम च तत्रैव कर्मसंहितलक्षणम् ॥ ४४

ध्रुवेषूदितमार्गेषु स्वरानष्टौ लिखेल्लघून् ।
कर्म चोदितसङ्ख्याकैःस्वरान्दीर्घान् लिखेत्सह ॥ ४५

शक्त्यक्षरं ध्रुवस्यादौ लिखेन्मन्त्री यथा क्रमम् ।
वश्ये वं कं मोहनेषु क्लीं लिखेद् ध्रुवमार्गतः ॥ ४६

द्वेषे उं रं तथाकर्षे ध्रु(?) श्रीं लं लिखेद्बुधः ॥
स्तम्भने जं तथा भेदे अंछिं देवि लिखेत्सुधीः ॥ ४७

उच्चाटने च फट् प्रोक्तं मारणे म्रं लिखेन्नरः ।
अ ध्रुवे विलिखेद्धीमान् संख्या मार्गेण तत्ववित् ॥ ४८

वश्ये अं आमिति प्रोक्तं कं कां मोहनको भवेत् ।
तं तामाकर्षणे ज्ञेयं पं पां स्तम्भनके शिवे ॥ ४९

यं यां भेदनके विद्यात् षं षां मारणकर्मणि ।
ह्रींकारं सर्वकोष्ठेषु सर्वकर्मणि कारयेत् ॥ ५०

चिन्तामणिध्रुवो विद्वान् क्ष्म्युं (क्ष्मर्यूं) श्रियुं(श्र्यूं) ल्यौं क्रमेव च ।
लं लिखेद्देवि बीजानि तुबुरो ? ध्रुवकोष्ठके । ५१

आधौ तं दूमिति प्रोक्तं तद्बीजानि महेश्वरि ।
लिखेत्षोडश कोष्ठेषु षट्कर्ममनुसंज्ञकान् ॥ ५२

मातृकाया अनुलोमार्णैं र्लिखेदष्टध्रुवेषु च ।
विलोमेन लिखेद्देवि अध्रुवेषु क्रमाल्लिखेत् ॥ ५३

इदं कक्षपुटं ख्यातं चक्रं षट्कर्मवित्तमैः ।
रेखाग्रेषु लिखेच्छूलान् ह्रीं कारेण तु संयुतान् ॥ ५४

तत्र शूलस्य पार्श्वे तु तथा पाशाङ्कुशौ लिखेत् ।
दिक्पालाद्यक्षरान् दिक्षु मातृणामक्षराणि च (ण्यपि) ॥ ५५

क्षेत्राधीशान् लिखेदष्टौ ह्रीं कारेण च वेष्टयेत् ।
रतिर्वाणी रमा ज्येष्ठा दुर्गा काली तथा स्मृता ॥ ५६

तद्बहिर्भूपुरं लिख्य हंसो दिक्षु चतुष्टये ।
जं रुं जीवाक्षरं नाम मं क्ष्म्युं दृष्ट(ष्ट्य)क्षरं मतम् ॥ ५७

एते दीपाक्षरे नाम वामदक्षिणपार्श्वयोः ।
नानाद्व्यं ततः सप्त षष्ठं च गुणा संख्यकम् ॥ ५८

नाना नाराष्टवस्त्राख्यं वेदभूतं ध्रुवे स्थितम् ।
अष्टादश कमारभ्य ध्रुवं सर्वत्र सुन्दरि ॥ ५९

वस्वष्ट भूतवेदानि वस्वेक त्रयषट् क्रमात् ।
अध्रुवेषु लिखेदेवमष्टादशक संख्यकम् ॥ ६०

एकोत्तरादध्रुवेषु द्वयमभ्यधिकं भवेत् ।
युग्म संख्येय माख्याता कोटिपर्यन्त योगतः ॥ ६१

नानारुषतलानाना नाना छ यलशासन ।
ध्रुव वसुकोणेष्वेवं देव्याः ——— ॥?॥ ६२

कुर्यादयुग्मसंख्यायां यसशलसयात एव ॥
एवं ध्रुव संख्या प्रकीर्तिता देवि ॥ ६३

संख्या सप्तदशस्य प्रोक्ता एधिका उभयम् ।
एवं युग्ममयुग्मं च कुर्याद्देवि महेश्वरि ॥ ६४

दिक्पालबीजमारभ्य यावद्बीजं तु चक्रके ।
तत्सर्वं चक्रराजेऽस्मिन् पञ्चपक्ष्यादिसंयुतम् ॥ ६५

अष्टादशात्तु वृष्टिः स्यात् स्थानप्राप्तिर्धनागमः ।
नवान् वहुफलांश्छालीन् विवाहं च प्रयलतः ॥ ६६

द्वाविंशाद् व्याघ्रवाग्वन्धो मूष(का)णामपि प्रिये ।
वीरेण निर्गमं यान्ति शलभास्तस्य जन्तवः ॥ ६७

षड्विंशाद्वै(च) वाहानां गतिस्तम्भः प्रजायते ॥
हरिणा धनसिद्धिः स्यात् न गच्छेद् गर्भसंभवः ॥ ६८

त्रिंशत्यैश्वर्यसिद्धिः स्यात् तथा धान्यस्य सुन्दरि ।
रं ग (कः) करोति यात्राणां(श्च) धनलाभं तथा सुखम् ॥ ६९

धनवृद्धिश्चतुस्त्रिंशाच्छूलनुत्कण्ठदन्तयोः ।
तुंगेन ग(भ)य शान्तिः स्यादार्तवं यान्ति बाल(लि)काः ॥ ७०

लेखस्तम्भोऽपि शत्रूणामनेनैव प्रजायते ।
चत्वार्याशत्रु (चत्वारिंशात्तु) सैन्यानां नाशो भवति सङ्गरे ॥ ७१

स्वस्य सैन्यस्य देवेशि भयो भवति सङ्गरे ।
रविणा रुग्णबालानां देतृ(देह) पूर्तिस्तु जायते ॥ ७२

चतुश्चरारिणां (चतुश्चत्वारिंशदा) शीघ्रं प्रसूर्भवति गर्भिणी ।
स्तवेन हि स्त्रियः पुंसां वशमायान्ति नान्यथा ॥ ७३

देवेन लोहकारस्य यच्छीघ्रं तु वरानने ।
पञ्चाशत्संख्यया ताम्रचूडस्तु विजयी भवेत् ॥ ७४

रामः स लाभं कुरुते वा(क्) स्तंभं प्रतिवादिनाम् ।
वशाद्विद्वेषणं देवि मित्रभेदं च वन्धुषु ॥ ७६

चर्मेण तैलकारस्य तैलं नायाति पुष्कलम् ।
होम(मात्) व्याधि विनाशः स्याच्छत्रूणां बलवद् दृढम् ॥ ७६

भर्तामुक्ता (भर्तृमुक्ताः) स्त्रियः क्रोधाच्छान्ता यान्ति पुनः पतिम् ।
षष्टिस्तु कुरुते भंगं वाहानां शीघ्रगामिनाम् ॥ ७७

रतिस्तु कुरुते भङ्गं रणे पार्श्वबलस्य च ।
चतुः षष्ट्या सदा नारी पतेः(पत्युः)(पतिं) स्व वशमानुयात् ॥ ७८

तुषेण बान्धवा मोहं यान्ति यन्त्रस्य धारणात् ।
जातीश्चेत्कुष्ठशान्तिः स्याद्विना भैषज्यकर्मणा ॥ ७९

सप्तत्या सैन्यहन्ता स्यात् भूतानां च पतिर्भवेत् ।
रसेन फलवृद्धिः स्यात् वृक्षाणां फल शालिनाम् ॥ ८०

क्वाथेन तु क्षयं यान्ति वात गुल्माश्च देहिनाम् ।
तीर्थेन सङ्गता नारी गर्भिणी भवति ध्रुवम् ॥ ८१

हंसेन लभते ज्ञानमपवर्गं सुरेश्वरि ।
अतिद्धा (अशीत्या)ऽपस्मारशान्तिःस्याद्भूतवेतालविग्रहम् ॥ ८२

राहुणा सुखमाप्नोति गृहस्थो निश्चलात्मवान् ।
वेदेन विज्वरो भूत शीतज्वरभयादपि ॥ ८३

तोदोऽप्यपहरेत्क्षोदं नराणां विजयं भवेत् ।
दाहस्तु कुम्भकाराणां भाण्डनिर्माणविघ्नकृत् ॥ ८४

नि(न) वत्या कुष्टरूपाणां नाशो भवति देहिनाम् ।
भूतादिग्रह पीडादि मुक्ताः शन्तिमवाप्नु यात् (युः) ॥ ८५

रोधान्निरोधमाप्नोति पतत्री पक्षिसंज्ञरे ।
विधुना धान्यसिद्धिः स्यात् गृहेषु च खलेषु च ॥ ८६

तालेन क्षीयते क्षीरं गवां वैरी जनस्य च ।
तालस्य वश्यतां यान्ति शस्त्राणि विविधानि च ॥ ८७

शतेन कविता भूयात् क्षयव्याधिः क्षणात्क्षयम् ।
ज्वरोऽपि शमनं याति ध्रुवं नास्त्यत्र संशयः ॥ ८८

वेदोत्तरशताद्देवि : शिरोरोगाविनाशनम् ।
तेनैव रिपुशोषः स्यात् तथा तैलस्य सुन्दरि ॥ ८९

परसेनाबलं चापि ज्ञानं गोक्षीरवर्धनम् ।:
जनकैः सर्वसिद्धिः स्याद् वशान्नाभ्या वसूरिकाः ॥ ९०

कपटैर्बन्धुविश्लेषो गोक्षीरस्य विवर्धनम् ।
कृपया बन्धु सम्पत्ति गोपालानां विवर्धनाम् ॥ ९१

त्रयोदशोत्तर शतात् सम्पदाजननं भवेत् ।
ताटकाद् विद्यते लक्ष्मीः संकटान्नृपतिर्भवेत् ॥ ९२

जायया शत्रुनाशःस्यात् पटुश्च धनवान् गृही ।
नरःस्यान्नरसन्मानं परःस्याद्विषशत्रुजित् ॥ ९३

स्वरः स्या द्वि द्वि त्रि (द्वित्त) हानिश्च व्यापार ग्रहयोःक्रमात् ॥
गौरी कोष्णीष सिद्धिःस्यात् पर ये विरवान्मुखः ? ॥ ९४

शूरस्य शौर्यवृद्धिःस्यात् तारया पुत्रसंभवः ।
एकत्रिंशशताद् दृष्टि तथा रङ्ग झरी भवेत् ॥ ९५

रंगया विजय प्राप्तिर्वेलया विरहं भवेत् ।
शूलया चाक्षिरोगःस्यात्तिलकैरन्धको भवेत् ॥ ९६

सल्लापैर्भारहानिःस्यात् जालकैर्नादधेद्भयम् ॥
धूलस्यार्धमतस्यापि निर्भयं गजरोधकृत् ॥ ९७

कफयैस्तरुहं(भं)गःस्याद् रभयैः शत्रुबन्धनम् ।
गभयैः स्वकरोधःस्यात् भयर्भवबन्धनम् ॥ ९८

मेघःस्यात् सर्वरोगघ्नस्तावलः शत्रुदर्पलम् ।
सेवया कंसभेदीस्या द् दर्विका दुःख शान्तिकम् ॥ ९९

यावयो विषशान्तिःस्यात् अश्वस्तम्भश्च नाशकैः ॥
कर्मकोयै(पै)र्जयं युद्धे रामक्ष्यैः सेतुबन्धनम् ॥ १००

गभयैरभयो भूयात् शत्रुनाशं च दर्मया ।
धवलाभस्य शर्म स्यात् तच्छलं सस्यशोषणम् ॥ १०१

सोमया शत्रुनाशं(शः)स्यात् स्त्री वश्या च भविष्यति ।
एताभिरुक्तसंख्याभिरिष्टानिष्टस्य कारणम् ॥ १०२

उक्तं यन्त्रं करोतीदं सर्वाभीष्टमवाप्स्यसि ।
इति विरचित यन्त्रं सर्वधा(दा)त्रीं यमाया-
मसितकुसुममालैः पायसैः पूज्य देवीम् ।
तमध(थ) करतलेनः(न) स्पृश्य मन्त्रं जपित्वा
दशशत परिमाणं धारयेद्यन्त्रराजम् ॥ १०३

कन्यया कृतसूत्रेण वध्वा शतवितस्तिना ।
धारयेद्यन्त्रराजानं सर्वाभीष्टफलप्रदम् ॥ १०४

रोगाणां विषदष्टानि(नां) वश्यादीनां च धारयेत् ।
भूकार्यं व्रीहिचित्तानां धारयेत्सिद्धये तनौ ॥ १०५

द्यूतरोध मयसामतापनं
क्षीरशोषण मकथं सभे वनम् ।
इक्षु तैल रस वर्जनादिकं

तत्र तत्र धरणीतले क्षिपेत् ॥ १०६

एतद्यन्त्रं तव प्रोक्तं कोटिकर्म प्रसिद्धिदम् ।
भुवनेशीमहाचक्रं गोप्यं भुवननायिके ॥ १०७

इति श्रीमहालक्ष्मीकल्पे नारायणब्रह्मोमामहेश्वर-
संवादे प्रत्यक्षसिद्धिप्रदे महालक्ष्मी -
रत्न (कल्प) कोशाख्ये एकोन-
चत्वारिंशोऽध्यायः ॥

## ॥ चत्वारिंशोऽध्यायः ॥

वाराह्या मन्त्रराजस्य रुद्रः कालानलो ऋषिः ।
छन्दोऽतिजगती देवी देवता परिकीर्तिता ॥ १

[1]ऐं व्यौं(ग्लौं) क्लीमिति बीजादित्रयं देवि न्यसेत्क्रमात् ।
ऐं व्यौं(ग्लौं) क्लीं श्रींमहामायां तथावार्तालियुग्मकम् ॥ २

वाराहिद्वयमुद्धृत्य वराहमुखियुग्मकम् ।
अन्धे अन्धिनि तत्पश्चात् नमश्चाङ्गुष्ठयोर्न्यसेत् ॥ ३

रुन्धेरुन्धिनि संप्रोक्त्वा तर्जनीभ्यां नमो न्यसेत् ।
जृंभे जृम्भिणि नत्वा च मध्यमाभ्यां न्यसेद्बुधः ॥ ४

मोहे मोहिनि नत्युक्त्वाऽनामिकाभ्यां तथा न्यसेत् ।
स्तम्भे स्तम्भिनि नत्वा च कनिष्ठयुग्मके न्यसेत् ॥ ५

सर्वदुष्टप्रदुष्टानां सर्वेषामिति संवदेत् ।
शत्रूणां सर्ववाक्चित्तचक्षुश्चोक्त्वा मुखेति च ॥ ६

गतिजिह्वास्तम्भनं च कुरुद्वन्द्वं वदेत् तथा ।
शीघ्रं प्रोक्त्वा तथा वश्यं कुरुयुग्मं ठवेदकम् ॥ ७

हुं फट् स्वाहान्तकं देवि न्यसेत्पृष्ठद्वये सुधीः ।
एवं कृत्वा षडङ्गं च पश्चाद् ध्यायेन्महेश्वरीम् ॥ ८

---

1. 'मातृकागतोऽयं पाठः/ग्लौं बीजं - ऐं शक्तिः
हीं कीलकमिति ग्रन्थान्तरे ॥

चक्रं खड्गं मुसलमभयं दक्षिणाभिःसुदोर्भिः
शङ्खं खंडे(खेटं) हलमथ वरं बिभ्रतीं वामदोर्भिः ।
सिंहासीनामयुगनयनां श्यामलां का (को)लवक्त्रां
वन्दे देवीं सकलफलदां पञ्चमीं मातृमध्ये ॥ ९

एवं ध्यात्वा जपेन्मन्त्रमर्धरात्रौ महेश्वरि ।
अयुतं मन्त्रसिद्धिःस्यात् शत्रूणां नाशनं ततः ॥ १०

तारं मां नमो वाराहि घोरेति च तथा वदेत् ।
स्वप्नं ठःठः स्वाहया च स्वप्नवाराहिकामनुः ॥ ११

तारं नमो भगवतीत्यग्निवाराहि तत्परम् ।
मम शत्रुं भक्षे(क्षये)ति स्वाहान्तो मन्त्र उच्यते ॥ १२

क्षणाच्छत्रुविनाशःस्यादग्निवाराहिमन्त्रतः ।
पार्थिक्यापानं सायातक्रमं वच्म्यवधारयेत् ॥ १३

(पार्थक्येनाथ तद्यन्त्रक्रमं वच्म्यवधारय)

वह्निकोणं च पञ्चाग्रं वसुकोणं वसोर्दलम् ।
तद्बाह्ये शतपत्रं स्यात्सहस्रारं च तद्बहिः ॥ १४

एवं चक्रं च वाराह्याःकृत्वा पूजां समारभेत् ।
वाराहीं मध्यदेशे तु संपूज्य परमेश्वरीम् ॥ १५

जृम्भिणीं स्तम्भिनीं नित्यं त्रिकोणे तु समर्चयेत् ।
ऐं ग्लौं (ग्लौं) क्लीं च त्रयं प्रोक्त्वा जपेदंधिनिपञ्चकम् ॥ १६

अन्धिनी रुन्धिनी चैव जृम्भिणी मोहिनी तथा ।
स्तम्भिनीति चतुर्थ्यन्तं पञ्चकोणेषु पूजयेत् ॥ १७

हाकिनीं साकिनीं चैव काकिनीं राकिणीमपि ।
डाकिनीं शाकिनीं चैव रसाश्रे मनुभिर्यजेत् ॥ १८

दक्ष(क्षे)वामे च मुसलं हलं संपूज्य तत्परम् ।
ब्राह्म्यदीनष्टकोणेषु यजेत्पूर्वादनुक्रमात् ॥ १९

दलेष्वष्टसु देवेशि वार्ताल्याद्यष्टकं यजेत् ।
महिषं च महाकृष्णं मृगराजं पुरो यजेत् ॥ २०

शतपत्रं त्रिधा कृत्वा पूजयेत्सुरवन्दिते ।
महादेवं वराहं च रुद्रं शङ्करमेव च ॥ २१

नीलकण्ठं लोहितं च ईशानं विजयं ततः ।
भीमं देवं महादेवि पूजयेच्च भवोद्भवम् ॥ २२

कपालिनं विकर्तं च विवस्वन्तं ततः परम् ।
मार्ताण्डाख्यं रविं लोकप्रकाशं लोकसाक्षिणम् ॥ २३

त्रिविक्रमं तथादित्यं पूष्णं चैवांशुमालिनम् ।
दिवाकरं धरं चैव धवं चारुणसंज्ञकम् ॥ २४

अनिलं पून्यूषणाख्यं (?) प्रभासं चाश्विनावुभौ ।
इति संपूज्य देवेशि त्रिधा एतान्यजेत्पुनः ॥ २५

सहस्रमष्टधा कृत्वा पूजयेद्भैरवान् क्रमात् ।
क्षेत्रपालं महेशानि त्रिपुरान्तकभैरवम् ॥ २६

वह्निभैरवमभ्यर्च्य विद्युद्भैरवमेव च ।
अचलाख्यं तथोग्रं च रुद्रं भैरवमेव च ॥ २७

अष्टदिक्षु महेशानि भैरवान् क्रमशो यजेत् ।
हनरयूमिति संप्रोक्त्वा हामित्यादेश्च षट्ककम् ॥ २८

हाकिनि जृम्भयेत्युक्त्वा जृम्भयेति वदेन्मम ।
शत्रूणां देवदत्तानां सर्वपूर्वं वदेत्सुधीः ॥ २९

मेदोधातुं चर्वयेति युगं प्रोक्त्वाऽणिमादि च ।
वश्यं कुरुद्वयं प्रोक्त्वा ठकारस्य चतुष्टयम् ॥ ३०

हुंफट् स्वाहान्तको मन्त्रो हाकिन्याः परिकीर्तितः ।
सनरयूमिति संप्रोक्त्वा सामित्यादेश्च षट्ककम् ॥ ३१

साकिनि जृम्भय युग्मं मम सर्व पदं वदेत् ।
शत्रूणां देवदत्तानामस्थिधातुं वदेत्परम् ॥ ३२

भर्भ (र्ज)यद्वयमुच्चार्य अणिमादिपदं पुनः ।
वश्यं कुरुद्वयं पश्चात् ठवेदं हुंफडित्यपि ॥ ३३

स्वाहान्तकस्तु साकिन्या मन्त्रोऽयं परिकीर्तितः ।
कनरयूं च कामादिषट्कं काकिनि तत्परम् ॥ ३४

जृम्भयद्वयमुच्चार्य मम सर्वपदं वदेत् ।
शत्रूणां देव ता (दत्ता) नां मेदधातुं ततःपरम् ॥ ३५

शत्रूणां देवदत्तानां मांसधातुं ततः परम् ।
चर्वय युग्मं ततः पश्चाद) णिमादीन् वदेत्परम् ॥ ३६अ

वश्यं कुरुयुगं शेषः पूर्ववत्परिकीर्तितः ॥ ३६

रमरयूं तथा षट्कं राकिनीति ततः परम् ।
जृम्भयद्वयमुच्चार्य मम सर्वपदं वदेत् ॥ ३७

शत्रूणां देवदत्तानां रत्लं (क्त) धातुं विव (पिव) द्वयम् ।
शेषं पूर्ववदाख्यातं सर्वरक्तविनाशनम् ॥ ३८

डमरयूं तथाषट्कं डाकिनीति पदं ततः ।
जृम्भयद्वयमुद्धृत्य मम सर्वपदं वदेत् ॥ ३९

शत्रूणां देवदत्तानां त्वग्धातुं गृह (ह्ण) युग्मकम् ।
शेषं पूर्ववदाख्यातं शत्रुं बध्नानु नाशनम् ॥ ४०

(शुत्रुबाधानुनाशनम् ॥)

शमरयूं त ता(था)षट्कं शांति (शाकि)नि जृम्भय द्वयम् ।
मम सर्वपदं प्रोक्त्वा देवदत्तान्तमुद्धरेत् ॥ ४१

शुक्ल(मज्जा)धातुं गृहं (ह्ण) युग्मं शेषं पूर्ववदुच्यते ।
यमरयूं तथा षट्कं यक्षिणी (याकिनी) ति ततः परम् ॥ ४२

देवदत्तस्य शुक्लस्य धातुं खादययुग्मकम् ।
मायां कालेतिसंप्रोक्त्वा संक्रामणि वदेत्ततः ॥ ४३

एहिस्सखा (?) तथा प्रोक्त्वा प्रें ह्रीं स्वाहान्तको मनुः ।
एवं जप्त्वा तथा सप्त पिण्डैश्च बलिमाहरेत् ॥ ४४

एवं दुष्टतरात्मानं द्वेष्टारं मम नित्यशः ।
गृह्णन्तु देवदत्तानां मया दत्तं महापशुम् ॥ ४५

आज्ञया द्विप्रमाणं स्यात् प्रमाणं यदि चाद्वयम् (?)
तेन सत्येन गृह्णन्तु मया दत्तं महापशुम् ॥ ४६

इति विज्ञाप्य देवेशि क्षेत्रपालबलिं हरेत् ।
एवं पूजाविधिः प्रोक्तो वाराह्या वरवर्णिनि ॥ ४७

ऐं ल्वौं (ग्लो) क्लीं च समुच्चार्य वाराहीति रिपौ त्वचम् ।
गृह्ण गृह्ण च वाराहि मम प्रोक्त्वा त्वचं ततः ॥ ४८

पालयेति ततो हुंफट् स्वा (हा) शत्रोस्त्वचापहा ।
बीजत्रयं तथान्धेति मद्वैरीति पदं पुनः ॥ ४९

मांसं भक्षययुग्मं स्यात् अन्धिनि मम तत्परम् ।
मांसं वर्धययुग्मं च (हुं)फट् स्वाहेति मन्त्रतः ॥ ५०

शत्रोर्मांसं क्षणं ना (णान्ना) शमा ये (या) ति परमेश्वरि ।
बीजत्रयं च रुन्धे च पश्चान्मच्छत्रुरुच्यते ॥ ५१

मे (मे) दं (दः) शोषय युग्मं स्यात् अन्धिनि मम तत्परम् ।
मे दं (दः) प्रीतययुग्मेन हुंफट् स्वाहान्को मनुः ॥ ५२

शत्रुमेदं (दो) हरेत्तेषां सर्वशत्रुविनाशनः ।
बीजत्रयं तथा जृम्भे मम शत्रोस्ततः परम् ॥ ५३

अस्थि चर्वययुग्मेन जृम्भिणि मम तत्परम् ।
अस्थि पालय युग्मेन हुंफट् स्वाहान्तको मनुः ॥ ५४

चर्वितं भवति क्षिप्रं शत्रोरस्थि च यत्पदाम् (?) ।
बीजत्रयं तथा मोहे ममारे (:) सर्वदच्छुभे ॥ ५५

मज्जां खादय युग्मं स्यान्मोहिनि मम संवदेत् ।
मज्जां द्रढययुग्मेन हुंफट्स्वाहामनुर्भवेत् ॥ ५६

शत्रोर्मज्जां हरत्येव नागं ताक्ष्यों यथा क्षणात् ।
बीजत्रयं च स्तम्भेदि मम शब्दं रिपोः पदम् ॥ ५७

शुक्लं गृह्णयुगं पश्चात् स्तम्भिनि मम तत्परम् ।
शुक्लं पालययुग्मं स्यात् हुंफट् स्वाहान्तको मनुः ॥ ५८

शुक्लधातुहरो मन्त्रः स्वस्य शुक्लविवर्धनः ।
एवं प्रोक्तं तु वाराह्याः क्रम (त) सर्वार्थसिद्धिदम् ॥ ५९

त्रिपुरा सिद्धलक्ष्मी (श्री) मातङ्गी भुवनेश्वरी ।
वाराही चेति लक्ष्म्यास्तु शक्तयः पञ्च कीर्तिताः ॥ ६०

एतासां वैभवं प्रोक्तं तव संक्षेपतः प्रिये ।
किमत्र बहुनोक्तेन श्रीसमाः पञ्च शक्तयः ॥ ६१

इति श्रीमहालक्ष्मीकल्पे नारायणब्रह्मोमामहेश्वर-
संवादे प्रत्यक्षसिद्धिप्रदे महालक्ष्मी -
रत्न (कल्प) कोशाख्ये
चत्वारिंशोऽध्यायः ॥

## ॥ एकचत्वारिंशोऽध्यायः ॥

अन्नपूर्णामहादेव्या ह्यजो नाम महा(न्) ऋषिः ।
छन्दस्तु देवीगयात्री ह्यन्नपूर्णा तु देवता ॥ १

ह्रीं बीजमथ क्लीं शक्तिःस्वाहा कीलकमुच्यते ।
ह्रां सां श्लां क्लां तथा दीर्घबीजैरङ्गं विधीयते ॥ २

वामे माणिक्यपात्रं मधुरसभरितं विभ्रतीं पाणिपद्मे
दिव्यै रत्नैःसुपूर्णां धृतमणिवलये दक्षिणे चैव दर्वीन् ।
रत्नाङ्गीं पीनतुङ्गस्तनभरनमितां तारहारां त्रिणेत्रां
वन्दे पूर्णेन्दुबिम्वप्रतिनिभवदनामम्बिकामन्नपूर्णाम् ॥ ३

एवं ध्यात्वा जपेल्लक्षं सप्तविंशतिवर्णि(र्ण)कम् ।
मायां परां श्रियं मारं समुद्धृत्य च तारकम् ॥ ४

नमो भगवतीत्युक्त्वा चान्ये (चान्न) पूर्णेति तत्परम् ।
ममाभिलषितं चान्नं देहि स्वाहान्तको मनुः ॥ ५

सप्तविंशतिवर्णोऽयं सर्वत्रान्नसमृद्धिकृत् ।
दारिद्र्यकाष्ठदावाग्निः क्षुद्वह्निशमने जलम् ॥ ६

दौर्भाग्याखोश्च मार्जारः सिंहो ज्येष्ठागजस्य च ।
असमृद्धिमहासर्पतार्क्ष्यः सर्वोत्तमोत्तमः ॥ ७

अज्ञानान्धतमःपुञ्जभास्करो भाग्यदायकः ।
भक्तचातकसंघानां कालमेघो महेश्वरि ॥ ८

दारिद्र्यतापसंम्लानसप्तसस्यसुधारकः
पापपर्वतसंघानां वज्रमन्नसमृद्धिदः ॥ ९

ज्येष्ठादेवीमहातूलचण्डवातो महेश्वरि ।
सेतुः कामादिमात्सर्यसमुद्रस्य शुचिस्मिते ॥ १०

चन्द्रश्चान्नाम्बुधेः क्षीरसमुद्राणां निशाकरः ।
जपतां कल्पवृक्षश्च धेनुश्चिन्तामणिः प्रिये ॥ ११

एतादृशं महामन्त्रं लक्षमात्रं जपेद्यदि ।
दारिद्र्यमपहायाशु धनं धान्यं च विन्दति ॥ १२

अन्नं यथेप्सितं तस्य यावज्जीवसमृद्धिमत् ।
गोक्षीरेणायुतं हुत्वा साधको रमते सदा ॥ १३

सर्वेषामन्नदा साक्षादन्नपूर्णेव साधकः ।
गोक्षीरेणावृतैरन्नैः साज्यैर्हुत्वा सहस्रकम् ॥ १४

क्षीरान्नदाने शक्तिः स्यात्सर्वदा सर्वदेशिके ।
अष्टोत्तरशतं नित्यं ध्यानपूर्वं जपेद्यदि ॥ १५

अटव्यामपि देवेशि क्षीरान्नं ऋद्धिमु(म)द्भवेत् ।
शतवारमिमं मन्त्रमन्नं स्पृष्ट्वा जपेद्यदि ॥ १६

क्षणादन्नसमृद्धिः स्यादर्णवश्चन्द्रदर्शनात् ।
एतन्मन्त्रेण देवेशि सर्वं मृज्याभिमन्त्रयेत् ॥ १७

तस्मादन्नसमृद्धिः स्यादक्षया नात्र संशयः ।

अकाल चातिथौ प्राप्त देवीं ध्यात्वाऽभिमन्त्र्य च ॥ १८

किञ्चिदन्नसमृद्धिःस्यात्क्षणादेव हि पश्यतः ।
तस्मादिमां महाविद्यां जपेन्नित्यहमादृतः ॥ १९

सर्वभाग्यमिह प्राप्य स जीवेच्छरदां शतम् ।
अन्नपूर्णामहामन्त्रमन्यं वक्ष्यामि सुन्दरि ॥ २०

मायां लक्ष्मीं तथा काममुद्धृत्य भुवनेश्वरीम् ।
अष्टाक्षरस्य मन्त्रस्य विश्वामित्रो ऋषिः स्मृतः ॥ २१

छन्दो गायत्रमाख्यातं देवता चान्नदायिनी ।
ह्रीं बीजमथ श्रीं शक्तिः क्लीं कीलकमुदीरितम् ॥ २२

योगः सर्वार्थसिध्यै स्यात् ह्रामित्यादिषडङ्गकम् ।
ध्यायेदन्नप्रदां देवीं अरविन्दविलोचने ॥ २३

विवर्धमान पा यासां (पायसान्न) वर्धमान दर्विका
विराजमानवामदक्षपाणिपल्लवद्वया ।
*मदालये वसेदुमा नतान्नदा सदा सदा ॥ २४

एवं ध्यात्वा महामन्त्रं जपेल्लक्षत्रयं शिवे ।
इह भोगान् समाश्रित्य ज्ञानं विन्दति सुन्दरि ॥ २५

वह्निबाणवसुकोणतच्छदैः
दिग्दलं तदनु षोडशं दलम् ।
भूपुरत्रयवृतं मनुत्रयै (?)
रन्नसम्पदखिलार्थसिद्धिदम् ॥ २६



* नवहेमभूषणोपशोभिताङ्ग यष्टिका

एतद्यन्त्रं समालिख्य विन्दौ (न्दावेका) एकाक्षरं लिखेत् ।
अष्टार्णं भुवनेश्वर्या न्यसेदष्टदलेष्वपि ॥ २७

दशषोडशसंख्येषु सप्तविंशतिवर्णकम् ।
भूपुरे मातृकां विद्यात् यन्त्रं सर्वार्थसिद्धिदम् ॥ २८

अन्नपूर्णामहाचक्रमखिलार्थैककारणम् ।
पार्थक्ये देवि वक्ष्यामि अन्नपूर्णाक्रमं मनुम् ॥ २९

रक्तां चामुण्डिकां देवीं महामायां त्रिकोणके ।
पञ्चारे चान्नदामन्नपूर्णानमन्नसमृद्धिदाम् ॥ ३०

अन्नेशीमन्नमध्यस्थां द्राविण्याद्यन्तरालके ।
वशिनीप्रमुखाद्यष्ट पूजयेदष्टकोणके ॥ ३१

अनङ्गकुसुमाद्यष्ट पूजयेद्वसुपत्रके ।
विभूतिमुन्नतिं कान्तिं हृष्टिं कीर्तिं च सन्नतिम् ॥ ३२

व्युष्टिमुत्कृष्टिमृद्धिं च लक्ष्मीं दश समर्चयेत् ।
शङ्खपद्मनिधी देवि पूजयेद् द्वारपार्श्वयोः ॥ ३१

मदनं च वसन्तं च रत्या प्रीत्या तथार्चयेत् ।
गजाभ्यां सह लक्ष्मीं च चतुर्हस्तां समर्चयेत् ॥ ३४

अणिमादिमहासिद्धीर्दिक्षु ताश्च समर्चयेत् ।
सनवावरणां देवीमन्नपूर्णां समर्चयेत् ॥ ३५

एतद्गुह्यतमं देवि सर्वसिद्धेः प्रदायकम् ।
सर्ववश्यकरं देवि स्मरणादन्नसिद्धिदम् ॥ ३६

असत्सु नोपदेष्टव्यं सत्सु वाच्यं विशेषतः ।
अन्नपूर्णामहामन्त्रं जपेत्सिद्धिं समश्नुते ॥ ३७

(अन्नपूर्णामहामन्त्रजपात्सिद्धिं समश्नुते )

इति श्रीमहालक्ष्मीकल्पे नारायणब्रह्मोमामहेश्वर-
संवादे प्रत्यक्षसिद्धिप्रदे महालक्ष्मी -
रत्न (कल्प) कोशाख्ये एक -
चत्वारिंशोऽध्यायः ॥

## ॥ द्विचत्वारिंशोऽध्यायः ॥

राज्यलक्ष्म्यास्तु मन्त्रस्य ऋषिरानन्दभैरवः ।
छन्दो गायत्रमेव स्याद्देवता राज्यदायिनी ॥ १

श्रीमाया मदनं देवि वीजं शक्तिश्च कीलकम् ।
योगः सर्वार्थसिध्यै तु विनियोगो वरानने ॥ २

सर्वज्ञा नित्यतृप्ता चानादिवोधा स्वतन्त्रका
अलुप्ता चाप्यनन्ता च शक्तयः षट् क्रमान्न्यसेत् ॥ ३

षड्दीर्घशक्तिवीजेन षडङ्गानि समर्चयेत् ।
तारादिनववीजानि नवाधारेषु विन्यसेत् ॥ ४

राज्यदे राज्यलक्ष्मीति व्यापकं तदनन्तरम् ।
प्रातिलोम्येन वीजानि पूर्वस्थानेषु विन्सेत् ॥ ५

ध्यायेद्राज्यप्रदां लक्ष्मीं सर्वैश्वर्यप्रदायिनीम् ।
जाम्बूनदसमाकारां पद्मपत्रायतेक्षणाम् ॥ ६

नानाभरणसंशोभिपीनोन्नतपयोधराम् ।
क्वचि(ग)त्काञ्चीगुणां नागकुम्भस्तनविराजिताम् ॥ ७

मध्ये क्षीणां शरच्चन्द्रवदनाम्भोजशोभिताम् ।
लावल्ये श्रीस(लावण्यश्रिय) माध्यायेत्सर्वसौभाग्यसुन्दरीम् ॥ ८

पद्मं कल्पलतां चैव मुकुरं तु विपञ्चिकाम् ।
पुष्पेषुनिक्षुचापं च शालिकायां स्रजं करैः ॥ ९

बिभ्रतीं वरदाभीति सर्वाभरणभूषिताम् ।
एवं दशभुजां ध्यायेद्राज्यलक्ष्मीं शुचिस्मिताम् ॥ १०

तारश्रीशक्तिकामानां बीजानि तदनन्तरम् ।
व्लूंमैमामीं च संप्रोक्त्वा राज्यदे पदमुद्धरेत् ॥ ११

राज्यलक्ष्मीति संप्रोक्त्वा सईं आं ऐं तथा ब्लूं च ।
कामं मायां श्रियं प्रोक्त्वा मन्त्रमेवं समुद्धरेत् ॥ १२

एवं प्रोक्ता राज्यलक्ष्म्या विद्या सर्वार्थसिद्धिदा ।
लक्षत्रयं महाविद्यां जप्त्वाऽऽतर्प्य दशांशकम् ॥ १३

तन्मानं पायसैर्हुत्वा विद्या सिद्धा भवेत्प्रिये ।
पार्थक्ये (न) राज्यलक्ष्म्याश्चक्रं वक्ष्यामि सुन्दरि ॥ १४

त्रिकोणं वृत्तषट्कोणं वृत्तं द्वादशकोणकम् ।
वस्वरं षोडशारं च चतुष्षष्टिदलं बहिः ॥ १५

चतुरस्रं चतुर्द्वारं कृत्वा चक्रं मनोहरम् ।
श्रीबीजं मध्यतो लिख्य परितस्त्र्यक्षरं लिखेत् ॥ १६

पञ्चबाणेन संवेष्ट्य साध्यसाधकनाम च ।
षट्कोणे पञ्च कामं च लक्ष्मीबीजेन संयुतम् ॥ १७

द्वादशारे लिखेद् विद्यां द्वन्द्वशस्तारपूर्विकाम् ।
वस्वरे तु ततो विद्यां प्रतिगेहं त्रियक्षरम्(?) ॥ १८

षोडशारे स्वरान् लिख्य चतुष्षष्टिदले मणिम् ।
एवं विलिख्य चक्रं तु भूपुरे मातृका लिखेत् ॥ १९

बिन्दौ राज्यप्रदामर्च्योंम। लक्ष्मीं च सरस्वतीम् ।
त्रिकोणेष्वथ षट्कोणे पूजयेत् षट् सुरेश्वरि ॥ २०

दुर्गां धरां तथा पद्मां गायत्रीं च उमामपि ।
वासुदेवादिकान् दिक्षु पूजयेदष्ट तत्परम् ॥ २१

श्रियं मायां प्रियां लक्ष्मीं विद्यां विश्वेश्वरीं जयाम् ।
विजयां चैव संपूज्य दले ब्राह्म्यादि मातृकाः ॥ २२

वा(चा) रिकाद्यणिमाद्याश्च कलाश्रेषु-रं(रमां) प्रिये ।
चतुष्षष्टिदले स्म्यादि शाङ्कर्याश्च(?) पूजयेत् ॥ २३

भूपुरे प्रथमं देवि दिक्पतीन्पूजयेत्क्रमात् ॥
ऐरावतः पुण्डरीको वामनः कुमुदोऽञ्जनः ॥ २४

पुष्पदन्तः सार्वभौमः सुप्रतीकश्च ते क्रमात् ।
वज्राद्यायुधमुख्यानि तद्वहिः पूजयेत्क्रमात् ॥ २५

पूजयेद्दक्षिणे पार्श्वे देव्याः शङ्करनन्दनम् ।
अन्यतः पुष्पधन्वानं पुष्पाञ्जलिकरो यजेत् ॥ २६

शङ्खपद्मनिधी पूज्यौ पार्श्वयोर्धृतचामरौ ।
राज्यलक्ष्म्याः क्रमः प्रोक्तो राज्यसिद्धिप्रदायकः ॥ २७

—

हस्त्यश्वमणिसम्पत्तिधनकूटैश्च नित्यशः ।
सेव्यते साधको नित्यं दीर्घमायुरवाप्नुयात् ॥ २८

इति श्रीमहालक्ष्मीकल्पे नारायणब्रह्मामहेश्वर-
संवादे प्रत्यक्षसिद्धिप्रदे महालक्ष्मी -
रत्न (कल्प) कोशाख्ये द्वि -
चत्वारिंशोऽध्यायः ॥

## ॥ त्रिचत्वारिंशोऽध्यायः ॥

पद्मावत्यास्तु मन्त्रस्य ऋषिर्मदन उच्यते ।
छन्दो गायत्रमाख्यातं देवता पद्मिनी स्मृता ॥ १

बालयावीजशक्ती च कीलकं च चरेद्बुधः ।
वीजैः पदैः षडङ्गं स्याद् ध्यायेत्पद्मावतीं पराम् ॥ २

उद्यद्भानुसहस्रनूतन जुषा(जपा)पुष्पप्रभां विभ्रतीं
फुल्लाम्भोरुहयुग्मकं करतले पुष्पेक्षुचापं शरां(रान्) ।
पीनोत्तुङ्गपयोधरोपरिलसद्धारावलीभूषितां
ध्यायेन्मोहिनिरूपिणीं विजयदां काम्यार्थसिध्यै श्रियम् ॥ ३

ऐं ओं नमो भगवति क्लीं पद्मावति तत्परम् ।
सौभाग्यं च ततः सर्वजनसंमोहिनीति च । ४

स्वाहान्तको मनुरयं सर्वसंमोहको नृणाम् ।
पुरश्चर्यार्णसाहस्रं त्रिसहस्रं क्रियादिषु ॥ ५

ऊर्ध्वं च तीर्थगृह(तिर्यक्कृत) वेदरेखा
लिखेन्महा (महेशानि) मनु क्रमेण ।
वाह्येषु शूलेन तदग्रसाध्यं
त्रैलोक्यसंमोहकरं त्वमोघम् ॥ ६

एतद्यन्त्रं समालिख्य पीठदेवीं समर्चयेत् ।
अष्टकोणं लिखेत्पूर्वं मस्तके शूलमग्रकम् ॥ ७

मूलवर्णत्रयं कोष्ठेष्वालिखेद्बाह्यशूलके ।
साध्यनाम च तन्मध्ये विलिखेत्कर्मसंयुतम् ॥ ८

क्रोधेन वेष्टयेद्देवि परितो माययैकया ।
भूपुरद्वयकोणेषु चतुर्थेषु वरानने । ९

बाणबीजादि विलिखेदिन्दुबीजयुतानि च ॥
कुरु(कुरु)द्वयमथो लिख्य रोचनाकुङ्कुमैः प्रिये ॥ १०

एतच्चक्रं महादेवि लिखेत्कृष्णाजिनोदरे ।
यस्य नाम्ना तु लिखितं तस्य प्राणान् प्रतिष्ठ्य च ॥ ११

निक्षिप्याधोमखं चर्म स्थित्वा तस्योपरि प्रिये ।
चतुर्विंशतिकोष्ठेषु देवीमावाह्य पूजयेत् ॥ १२

अष्टोत्तरसहस्रं तु जपेत्पद्मावतीमनुम् ।
ध्यानसन्नद्धहृदयो जपेत्साध्यादिदिङ्मुखः ॥ १३

साध्यः शीघ्रं समायाति जन्मान्तं वशगो भवेत् ।
राजा वा राजनारी वा राजपुत्रोऽथवा प्रिये ॥ १४

अचिरेण समायाति प्रसादात्पद्मिनीमनोः ।
आजन्मान्तं यशो देवि जायते नात्र चिन्तना ॥ १५

वाक्प्रयोगं प्रवक्ष्यामि पद्मावत्याः श्रृणु प्रिये ।
लिखेदष्टदलं पद्मं तद्बाह्ये द्वादशं दलम् ॥ १६

चतुर्द्वारसमायुक्तं लिखेद्यन्त्रं यथाक्रमम् ॥
मध्ये ध्यायेन्महालक्ष्मीं पद्मिनीं स्फटिकप्रभाम् ॥ १७

पद्मयुग्मं च पुण्ड्रेक्षुधनुर्बाणांश्च बिभ्रतीम् ॥
वरदाभयहस्तां च पुस्तकाक्षसृ(स्र) गन्विताम् ॥ १८

एवं संचिन्त्य मध्ये तु वशिनीप्रमुखा दले ।
वशिनी चैव कामेशी मोहिनी विमलाऽरुणा ॥ १९

जयिनी चैव सर्वेशी कौलिनीत्यष्टपद्मके ॥
मातृकार्णस्वरूपास्तु वशिन्याद्याः प्रकीर्तिताः ॥ २०

अवर्ग प्रथमादेवी वशिनी तत्र देवता ।
तत्परस्तु कवर्गोऽयं कामश्री(कामेशी) तत्र देवता ॥ २१

मो ह्वि(दि) नी तु स्व (चव) र्गस्था टवर्गे विमला स्थिता ।
अरुणा तु ट(त) वर्गस्था पवर्गे जयिनी तथा ॥ २२

सर्वेश्वरी यवर्गे तु शवर्गे कौलिनीति च ।
ध्येयाश्चन्द्रमणिप्रख्य (प्रख्याः) वशिन्याद्या महेश्वरि ॥ २३

संफुल्लसितपद्मस्था वरदाभययुग्मकम् ।
पुस्तकं त्वक्षमालां तु धारयन्ती कमण्डलुम् ॥ २४

व्याख्यामुद्रामिति ध्यायेत् वशिन्याद्यष्टदेवताः ।
उद्धरेत्प्रथमं रेफं तदधः कुटिलान्तकम् (?) ॥ २५

तदप्यवनिवीजस्थं षष्ठस्वरसमन्वितम् ।
विन्दुनप्युद्धरेद्देवि वशिनीबीजसंज्ञकम् ॥ २६

सर्वपापक्षयकरं सर्वोपद्रवनाशनम् । ¹ब्रूं(ब्लूं)
द्वितीयवर्गप्रथममिन्द्रारूढं महेश्वरि ॥ २७

अधस्तान्नाभसं बीजं आग्नेयस्थं समुद्धरेत् ।
चतुर्थस्वरसंयुक्तं बिन्दुखण्डद्विसंयुतम् ॥ २८

एतत्कामेश्वरीबीजं त्रैलोक्यक्षोभकारकम् ।(क्ल्हीं)
अरुणं पञ्चमस्यान्ते वरुणं विनियोजयेत् ॥ २९

तदधोऽपीन्द्रबीजं तु सर्वोर्ध्वमपरं प्रिये ।
एतद्धि मोहि (दि) नीबीजं सर्वसत्व म(व) शङ्करम् ।(च्लूं)(न्व्लीं) ३०

वायव्यन्द्रिबीजस्थं षष्ठस्वरसमन्वितम् ॥
अर्धेन्दुमध्यमाकान्तं बिन्दुनादविभूषितम् ॥ ३१

जकारं कमलारूढं तदधो ज्वलनाक्षरम् ॥ ३२
चतुर्थ स्वरसंयुक्तकलाबिन्दु समन्वितम् ।

एतत्तदरुणाबीजमेषणं सर्वमोहनम् ॥(ज्म्रीं) ३३
शिवबीजं तदादिस्थमधस्ताच्चेन्दुवारुणौ ।
वायव्य मुपरोद्भिन्नं(?) संयोज्य परमेश्वरी(रि) । ३४

जय(यि)नी बीजमेवेदं कलाबिन्दुविभूषितम् । (हस्इलव्लूं) (ह्स्लव्यूं)
उद्धरेन्मोदिनीवर्गचतुर्थं सुरवन्दिते ॥ ३५

अधः कालाग्निवायव्यान् क्रमेण विनियोजयेत् ।
दीर्घायुबीजसंयुक्तान् यथा यु(नु) क्रमयोगतः ॥ ३६

---



+ व्लूंमित्येव वशिनीबीजस्वरूपं प्रसिद्धम् ।

उपरीश्वर बिल्वा(न्द्वा)न्तानेकत्र विनियोजयेत् ।
एतत्सर्वेश्वरीबीजं सर्वत्रैवापराजितम् ॥ (श्रीं ?) (झ्म्यूं) ३७

का(कौ)लिनीं पञ्चमं देवि कालबीजोपरि स्थितम् ।
सर्वाधस्तादपि तथा वह्निबीजं नियोजयेत् ॥ ३८

चतुर्थस्वरसंयुक्तं बिन्दुखण्डद्वयान्वितम् ।
एतद्बीजं परं भद्रे कौलिनीरूपमास्थितम् ॥ (क्ष्मूं ?) (क्ष्म्रीं) ३९

एवमेतैर्महाबीजैर्वशिन्यादीन् समर्चयेत् ।
बाह्यद्वादशके पद्मे द्वयो र्च(श्च) दश योगिनीः ॥ ४०

अर्चयेत्कार्यकर्तृत्वसिद्धये पुरुषोत्तमः ।
विद्या तु रेकिनी चैव रेचिकाख्याऽमृता तथा ॥ ४१

दीपिका योगिनी ज्ञाना योगिन्याद्या तु योगिनी ।
नित्या मेधा तथा व्योमरूपा सिद्धिश्च योगिनी ॥ ४२

लक्ष्मीयोगिनि संख्याभिर्योगिन्यो द्वादश स्मृताः ॥(?)
शुद्धस्फटिकसंकाशः(शाः) योगिनीस्ताः समर्चयेत् ॥ ४३

चतुर्द्वारिषु देवेशि, गन्धाद्याकर्षणीः स्मृताः ।
गन्धाकर्षणिका नित्या रसाकर्षणि(ण) कारिणी ॥ ४४

रूपाकर्षणिका चैव स्पर्शाकर्षणिका क्रमात् ।
एवं संभावयेत्सर्वाः शुद्धस्फटिकसन्निभाः ॥ ४५

सितमाल्याधराः सर्वाः सितगन्धानुलेपिताः ।
कार्यकर्ता भवेच्छीघ्रं वाचस्पतिरिवापरः ॥ ४६

तद्वक्त्रान्निःसृता वाचो मधुराः क्षोभया(दाः) सदा ।
अनिवार्या महादेवि भवेयुश्चामृतोपमाः ॥ ४७

तस्मादेवं सदा ध्यायेत् वागैश्वर्याभिवृद्धये ॥ ४७ १/२

इति श्रीमहालक्ष्मीकल्पे नारायणब्रह्मोमामहेश्वर-
संवादे प्रत्यक्षसिद्धिप्रदे महालक्ष्मी -
रत्न (कल्प) कोशाख्ये त्रि -
चत्वारिंशोऽध्यायः ॥

## ।। चतुश्चत्वारिंशोऽध्यायः ।।

रतिदेव्यास्तु मन्त्रस्य वामदेवो ऋषिर्मतः ।
छन्दो गायत्रमाख्यातं देवता रतिरीरिता ॥ १

कामं वीजं च शक्तिः स्याच्छक्ति योंगा(गो)ऽर्थं सिद्धये ।
षडङ्ग(ङ्ग) कामराजेन दीर्घयुक्तेन विन्यसेत् ॥ २

तप्तकाञ्चनमेकाश शोभिदेह शोभितां
(तप्तकाञ्चनातिशायिशोभिदेहशोभितां)
तारहारपीनतुङ्गतुङ्गस्तनानतां स ता(दा) ।
उत्पलद्वय(यं) करद्वयेन बिभ्रतीं शुभां
पञ्चबाणनायिकां भजे रतिं(सु)रेश्वरीम् ॥ ३

एवं ध्यात्वा जपेन्मन्त्रं सर्ववश्यार्थमम्बिके ।
माया मदनबीजं च नमो भगवतीति च ॥ ४

रतिदेवि महा प्रोक्त्वा मोहिनीति ततः परम् ।
कामेशि सर्वलोकेति वशं कुरुयुगं वदेत् ॥ ५

स्वाहेति मन्त्रो द्वात्रिंशन्मनुः सर्ववशङ्करः ।
पुरश्चर्यार्णसाहस्रं त्रिसाहस्रं क्रियादिषु ॥ ६

ऊर्ध्वं च तिर्यक्कृत पञ्चरेखा
लिखेत्क्रमान्मन्त्रमतस्त्रिशूलम् ।
शूलेन साध्यान्वितशक्तिमारं ७
जगद्वशक्षोभविमोहयन्त्रम् ॥

———————— अमोघं सर्वसिद्धिदम् ।
तालपत्रे लिखेद्यन्त्रं पूज्य जप्त्वा सपल्लवम् ॥ ८

सहस्त्रं प्रजपेन्मन्त्रं स्वेष्टा(स्पृष्ट्वा) द्वारोपरि न्यसेत् ।
सुन्दरी पुरुषो वापि तत्क्षणात्स्ववशं व्रजेत् ॥ ९

स्त्रीवामपादपांसूंस्तानादाय रतिविद्यया ।
यन्त्रं तस्मै(तस्मिन्) समालिख्य पूर्वं पूज्यवदाचरेत् ॥ १०

(यन्त्रं तस्मिन्समालिख्य पूज्य पूर्ववददाचरेत् ।)
स्वगृहात्साध्यगेहात्तद्विकिरेद्यन्त्रवित्पुमान् ।
समायाति तदा साध्यं तन्मार्गेणैव सुन्दरी ॥ ११

विद्यया प्राणिनामङ्गमलमादाय मन्त्रवित् ।
तस्मिन्प्रतिकृतिं कृत्वा हृदि यन्त्रं समालिखेत् ॥ १२

तत्र तत्प्राणमावाह्य यन्त्रमध्ये विनिक्षिपेत् ।
अष्टोत्तरशताद्याति त्रिदिनाज्जन्तवो वशम् ॥ १३

यन्त्र सिद्धिषु(सन्धिषु) जन्तूनां न(ना)म संलिख्य मन्त्रवित् ।
दृष्ट्वा सहस्त्रं प्रजपेत् नवरात्रं तु मन्त्रवित् ॥ १४

दशयोजनसंस्थानां लभेदत्यद्भुतं वशम् ॥
एवं वधु(धूः)सदा [1]कुर्यात्पुरुषस्य वशार्थिनी ॥ १५

---

1. प्रणयकलहकुपितस्य देशान्तरगतस्य पत्युः आकर्षणायायं प्रयोगः ॥

मध्येवायुं सताध्यं शिखियुगसहितं तद्बहिःषोडशार्णं
तद्बाह्ये कोणषट्के रतिमनुमदध(थत)त्पार्श्वके बीजशक्तौ ।
यन्त्रं ताम्बूलपत्रे मलरवि(मलयज) पयसा काकपत्रेण कृत्वा
कुर्वन्दीपं त्रिरात्रं जपतु दशशतं देवताकर्षणाय ॥ १६

दास्यन्ति देवतास्तस्य सर्वाभीष्ट(ष्टं) समागतः(ताः) ॥
मारवद्भाति देवेशि मन्त्रविद्योषितां नृणाम् ॥ १७

एवं रतेर्विधिः प्रोक्तं(क्तो) मन्मथस्य श्रृणु प्रिये ।
अथ मन्मथमन्त्रस्य ऋषिः सम्मोहनं(नः) स्मृतः ॥ १८

छन्दो गायत्रमेव स्यात् देवता रतिनायकः ॥
कं बीजं लं ततः शक्तिः माया कीलकमुच्यते ॥ १९

योग(ः) सम्मोहसिध्यै स्यात् क्लामित्यादिषडङ्गकम् ।
अरुणमरुणवासो माल्य धा(दा) माङ्गरागं
करधृतशरचापं साङ्कुशं पाशयुक्तम् ।
मणिमयमकुटाद्यैर्दीप्तमाकल्पजातै
रतिसहितमनङ्गं चिन्तयेन्मोहसिध्यै ॥ २०

अ(थ) कलाप्रथमावनिशान्तिभी(भि) -
र्युतसुधाकरखण्डविकासिभिः ।
निगदितो मनुरेष मनोभ(भु)व(ः)
सकल धर्मसुखार्थयशोवहः ॥ २१

तरणिलक्षममुं मनुमादरात्

समभिजल्प्यं(जप्य) हुने त्र(त्तु) दशांशकैः ।

तदनु किंशुकजैः प्रसवैः शुभैः

मधुरसैश्च विचिन्तितसिद्धये । २२

पार्थिक्स्येमनस्येवं (पार्थक्याद्यन्त्रमस्यैव) वक्ष्ये सुन्दरि तच्छृणु ।

ङत्रि)न्दुं वह्निं तथा बाणसर्पकोणं च तत्परम् ॥ २३

कलायुग्मछदं नागपत्रं भूपुरमेव च ।

एवं त्रयं(यन्त्रं) समालिख्य पूजयेन्मदनेश्वरम् ॥ २४

मोहिनी क्षोभिणी त्रासी स्तम्भिन्याकर्षिणी तथा ।

द्राविण्याह्लादिनी क्लिन्ना क्लेदिनी मरशक्तिः (मारशक्तय:)+ ॥ २५

मदनस्य नव प्रोक्ता(:) शक्तय(:) पीठसंस्थि(स्थि ता(:) ।

रत्या तु सह कामेशं चन्द्रबिम्बे समर्चयेत् ॥ २६

वसन्तो मोहनो मानस्त्रिकोणेषु स्थि (स्थित:) प्रिये ।

द्राविणी शोषिणी चैव बंधिनी मोहिनी तथा ॥ २७

उन्मादिनी तिपं च(तापिनी च) पञ्च कन्दर्पशरक्तय: ।

कामराजश्च कन्दर्पो मन्मथो मकरध्वजः ॥ २८

मनोभवो महादेवी(वि) पंचकन्दर्प ईरित:(कन्दर्पा:पञ्च ईरिता:) ।

शोषणं मोहनं चैवं दीपनं तु ततः परम् ॥ २९

---

+ मन्मथपूजायन्त्रस्था: पीठ शक्तय: ।

सन्तापनं च सोन्मातं(सोन्मादं) शराष्यं च (शराः पञ्च) स्मरस्य तु ।
अनङ्गरूपा चानङ्ग स(म) दनाऽनङ्ग मन्मथ(था) ॥ ३०

अनङ्गकुसुमाऽनङ्गमदनातुरसंज्ञिका ।
अनङ्गशिशिराऽनङ्गमेखलाऽनङ्गदीपिका ॥ ३१

पुण्ड्रेक्षुचापपुष्पेषुवीणां(णा) शुकधराः करैः ।
अष्टकोणेषु संपूज्य(ज्याः) जपाकुसुमसन्निभाः ३२

युवतिर्विपुला वाच(चैव) ज्योत्स्ना शुभ्रा(सुभ्रू ...वा ।
सुरता वारुणी लोका(ला) कान्तिः सौदामिनी तथा ॥ ३३

कान्तछत्र(त्रा) चन्द्ररेखा सुकेशी मदनाह्वया ।
योनिर्नाया ग(व)ती चेति शक्तयस्यो(शक्तयोऽस्य) मनोभ(भु)वः ॥ ३४

शोको मोहो विलासश्च विभ्रमो मदनातुरः ।
अपत्रपो यु गा(वा)कामी क(चू)त पुष्पो रतिप्रि...) ॥ ३५

ग्रीवाम्म(ग्रीष्म)स्तपन ऊर्जश्च हेमन्तः शिशिरो ...ः ।
एवं षोडश कुसुमेषु पुष्पचापधराः स्मृताः ॥ ३६

अपाङ्ग(ङ्गा) भ्रू(भ्रू) विलासी च मत्तभावा स्मरांकुशा ।
माधवी मालती चैव हरिणाक्षी मदोत्कटा ॥ ३७

एताः कनरहस्ताः स्युः पूज्या यन्त्रेषु सुन्दरि ।
तद्बहिर्दिक्पतीन् सर्वान् पूजयेद्भूपुरे प्रिये ॥ ३८

स्मरकल्पोऽयं देवेशि सर्वसंमोहकारणम् ।

आलिक्त(ख्यात्) कर्णिकायामनलपुरपुटे मारबीजं ससाध्यं
तन्मध्येष्वङ्गषट्कं बहिगुर्हमुख(वह्निरपिगुण)शो मारगायत्रिवर्णान् ।
मालामन्त्रं दलाग्रेष्वभि(पि) गुणमुख शर(शः)पार्थिवाश्रेष्वनङ्गं
कुर्याद्यन्त्रं न(त)देतद्भुवनमपि वशे का कथा मानवेषु ॥ ३९

प्रोक्त्वा च कामदेवाय वि ग्र(द्म)हेति पदं वदेत् ।
पुष्पबाणाय तत्पश्चात् धीमहीति वदेत्सुधीः ॥ ४०

तन्नोऽनङ्गः प्रसंप्रोक्त्वा चोदयादिति संवदेत् ।
एवं मदनगायत्री उद्दिष्टा परमेश्वरी(रि) ॥ ४१

ओं नमः कामदेवाय वदेत्सर्वजनं तथा ।
प्रियाय सर्ववर्णान्ते जनसंमोहनाय च ॥ ४२

ज्वलद्वयं प्रज्वलार्णं वदेत् सर्वजनस्य च ॥
हृदयं मम शव्दान्ते वशंकुरुयुगं वदेत् ॥ ४३

स्वाहान्तको मनुरपि अष्ट [1]चत्वारि वर्णकः ।
पुनरन्यं प्रवक्ष्यामि सावधानमनाः श्रृणु ॥ ४४

क्लीमों नमो भगवते तत्परं रतिवल्लभा ।
यतिश्च विश्व मोहनायेति ज्वलयुग्मं ततः परम् ॥ ४५

कामाय क्लीं तथा वह्निजायान्ते त्रिंशदर्णकः ।
अस्य मा(मन्) त्रस्य देवेशि——ऋषिरुच्यते । ४६

---

1. ओं नमः कान देवाय सवंजन प्रियाय सवंजन संमोहनाय ज्वल ज्वल प्रज्वल सवं जनहृदयं मन वशं कुरु कुरु स्वाहा इति अष्टचत्वारिंशदर्णो मन्त्रः ॥

छन्दो गायत्र माख्यातं देवता रतिनायक: ।
क्लीं बीजं नी(ई) तत: शक्ति: स्वाहाकीलकमुच्यते ॥ ४७

क्लामित्यादि करन्यासं षडङ्गन्यासमाचरेत् ।
उद्यद्भानुसहस्रकुण्डलधरं चित्राम्बरालङ्कृतं
पाणिद्वन्द्वसुशोभिताब्जविलसत्पुण्ड्रेक्षुचापं शरम् ।

---

रत्यालिङ्गितवामभागमनिशं ध्यायेज्जगन्मोहनम् ॥ ४८

पुरश्चर्यार्णसाहस्रं होमे पञ्चप्रसूनकम् ।
युद्धे शत्रु श(भ)ये चैव राजराष्ट्रभयेषु च ॥ ४९

कलहे विजने मार्गे कान्तारे गिरिमंध(कंद)रे ।
विदेशे दुरितापत्सु स्मरेत्स्मरमनो(मनुं) सुधि(धी): ॥ ५०

तत्क्षणाज्जन्तव: सर्वे महाबलसमन्विता: ।
सर्वे मुह्यन्ति दुष्टाश्च दिवसस्याष्टमे यथा ॥ ५१

देवो देवर्षिसङ्घाश्च मुनीन्द्राद्याश्च राक्षसान् ।
मोहयेत्(?) स्मरमन्त्रेण विधिं विष्णुं च मामपि ॥ ५२

मध्ये स्वाहा च मारं मणिदलकमले शिष्टवर्णाङ्कितगान्
बाह्ये भूकोणवृत्तं स्मरमथ परित: पोडशारे स्मरं च ।
पश्चात्पञ्चादशा(शद)र्णं तदनु द्व(च) वलयद्वन्द्वकं [illegible]
[illegible] त्रैलोक्यमोहस्थितिलयमदं सर्ववर्गार्थ तं(दं) ५३

एतद्यन्त्रं लिखेद्धेमे[1] (हेम्नि) दृष्ट्वां(दृष्ट्वा) जप्त्वा सहस्रकम् ।
राजराष्ट्रजनानां च देवमूस(त)गृ(ग्र) हादिनाम् ॥ ५४

इतराणा(इतरेषा) मशेषाणां [2]सद्यो नश्यन्ति धारणात् ॥
स्मरशास्त्रेष्वनेकेषु यद्यदस्ति सहस्रकम् ॥ ५५

मन्त्रस्मरणमात्रेण तत्सर्वं सिध्यतीश्वरि ।
चराचरात्मके लोके कर्तव्यं यत्र वर्तते । ५६

तत्र स्मरेत् स्मरान्(स्मरं) मन्त्री सर्वकाम्यार्थसिद्धये ॥
स्मरमन्त्रमहावाणानपाङ्गगुणसंयुतान् । ५७

निच(ज) धृ(दृ) क्चापसंयुक्तान् पूरिताशाप्रपूरकम् ।
यन्त्रं यत्र स्मरेन्मन्त्री स्मरन्मूर्त्यात्मभावनः ॥ ५८

स लभेत्( ?) सर्वविजयं संशयो नास्ति शोभने ॥ ५८ १/२

इति श्रीमहालक्ष्मीकल्पे नारायणब्रह्मोमामहेश्वर-
संवादे प्रत्यक्षसिद्धिप्रदे महालक्ष्मी -
रत्न (कल्प) कोशाख्ये चतु -
श्चत्वारिंशोऽध्यायः ॥

---

1. हेमपट्टे 2. वाधा इति शेषः ।

## ॥ पञ्चत्रिंशोऽध्यायः ॥

मन्त्रस्य वसुधारायाः ऋषिः परमहर्षि(र्ष)णः ।
[1]छन्दो बृहति संप्रोक्तं वसुधारा तु देवता ॥ १

वं बीजं श्रीं ततः शक्तिः योगः सम्पत्समृद्धये ।
पां(वां) श्रामित्यादिना कुर्यात्षडङ्गं मातृकाक्षरैः ॥ २

तपनसदृशशोभा तप्तहेमाभवस्त्रा
करतलमणिपद्माभीरुदानाब्जहस्ता ।
निरवधि ज(ध)नजालैर्वर्षयंति(न्ती) स्वभक्तं
[2]विजयतु वसुधारा विश्वसौभाग्यरूपा ॥ ३

वारुणं च श्रियं तारं नमो भगवतीति च ।
वसुधारे तथा नित्यं कल्याण्येहियुगं वदेत् ॥ ४

निरवधि(क) संप्रोक्त्वा ऐश्वर्यं वर्षयद्वयम् ।
स्वाहेति मन्त्ररूपं तु प्रोक्तं षट्त्रिंशदक्षरम् ॥ ५

यथापुरार्णसाहस्रं होम(मो) द्रव्याष्टकैर्भवेत् ।
षट्त्रिंशत्कोव(ष्ठ) यन्त्रे भि(त्रि) शिखि(ख) परिवृते मन्त्रवर्णं तु मध्ये
बाह्ये साध्यं च लक्ष्मं त्वखिलपरिवृतं तारयुग्मेन पूर्णम् ।
हैमे पट्टे लिखित्वा लिपिसमदिवसं पूज्य जप्त्वा सहस्रं
मूर्ध्ना कण्ठेन यन्त्रं वहतु(स) सततं सर्वसंपत्समृध्यै ॥ ६

---

१. छन्दस्तु बृहती प्रोक्तम् ।

२. आर्षः प्रयोगोऽयमत्रैव बहुत्र ।

पुष्पितो ऋषिराख्यातो देवि शङ्खनिधेर्मनोः ।
छन्दस्तु पृहती शङ्खनिधिः स्याद्देवता मता ॥ ७

शं बीजं श्रीं ततः शक्तिः योगः सम्पत्समृद्धये ।
शां श्रामित्यादि संप्रोक्त्वा न्यासं कुर्यात्कराङ्गयोः ॥ ८

दिनकरसमदीप्तिर्दिव्यसम्पत्स्वरूपो
नवमणिवरपात्राभीतिदानाब्जहस्तः ।
निरवधिधनराशिं वर्ष(य) द्भिः स्वभृत्यैः
सह मनसि सदाऽऽस्तां शङ्खसंज्ञो निधिर्मे ॥ ९

[1]शं प्रोक्त्वा कम लोत्ता(लांता)रं नमो भगवती(ते)ति च ।
श्रीशङ्खनिधये प्रोक्त्वा प्रणताभीष्ट तत्परम् ॥ १०

पूरणाय ततोह्येह्ये (तथैह्ये) हियुगं सर्वै तथा वदेत् ।
श्वैर्यं सिद्धिं मे नु देहि स्वाहा चत्वारि(रिंशा) वर्णकः( ?) ॥ ११

1. शं श्रियंप्रणवं चैव नमो भगवते तथा । श्रीशङ्खं निधये पश्चात् प्रणताभीष्टतत्परम् । पूरणाय च तत्पश्चात् एह्येहि तदनन्तरम् । ततः सर्वैश्वर्यसिद्धिं देहि द्विरनल प्रिया । चत्वारिंशल्लिपिमयं मन्त्रमैश्वर्यसिद्धिदम् । इति अन्यत उपलब्धः पाठः ।

यथा पुरार्णसाहुलं [illegible] मालिकनारितम् ।
[2]ऊर्ध्वं तिर्यक्त्रिरेखां ग्रहरगणिता( ?) कोष्ठके मूल मन्त्रं
तद्बाह्ये रेख रेखा त्रिशिख परिवृतं साध्य शूलान्तरालम्( ?) ॥
शंबीजं श्रीरमाख्यप्रणवपरिवृतं हेमपत्रे च क्लृप्तं
त्रैलोक्यैश्वर्यसिद्धिप्रदमिदमतुलं सर्वसौभाग्ययन्त्रम् ॥ १२

यन्त्रमेतन्महावीर्यं लघु सर्वार्थसाधकम् ।
गलेन निवहेन्मूर्ध्ना जगदैश्वर्यसिद्धये ॥ १३

इति श्रीमहालक्ष्मीकल्पे नारायणब्रह्मोमामहेश्वर-
संवादे प्रत्यक्षसिद्धिप्रदे महालक्ष्मी-
रत्न (कल्प) कोशाख्ये पञ्च-
चत्वारिंशोऽध्यायः ॥

---

2. अशुद्धोऽयं यन्त्रोद्धारः ॥

## ॥ षट्चत्वारिंशोऽध्यायः ॥

लक्ष्मीमन्त्रस्य देवेशि भृगुर्नाम ऋषिः स्मृतः ।
निचृद्गायत्रमाख्यातं महालक्ष्मी तु(स्तु) देवता ॥ १

श्रिया वसाय (च मायया) बीजं शक्ति कुर्यात्समृद्धये ।
वीजाभ्यां पुटितां(ता) माया कमलेति पुनस्तथा ॥ २

हृदिन्यासं चरित्वा तु बीजाभ्यां पुटनं तथा ।
कमलालये च वीजाभ्यां पुटित्वा शिरसि न्यसेत् ॥ ३

प्रसीद पूर्वमुच्चार्य शिखायो(यां) विन्सेत्सुधीः ।
प्रसीद पूर्ववत्प्रोक्त्वा अवज(कवचं) न्यस्य तत्परम् ॥ ४

महालक्ष्मी(क्ष्मि) नमः प्रोक्त्वा पुटनं पूर्ववच्चरेत् ।
अस्त्रं कुर्याद्विशेषज्ञः पश्चातू(त्) ध्यायेन्महेश्वरीम् ॥ ५

वसुपात्रकरां पद्मौ(द्मे)धारयन्तीं तथाऽभयम् ।
विद्युत्प्रभं(भां) महालक्ष्मीं वासुदेवाङ्कसंश्रयाम् ॥ ६

ध्यात्वा जपेन्महामन्त्रं सम्पत्कामार्थसिद्धये ।
श्रीमाया कमला प्रोक्त्वा कमलेति पदं वदेत् ॥ ७

पदंते (पदान्ते) योजयेद्देवि बुद्धितो(तः) कमलालये ।
प्रसीदयुग्मं संप्रोक्त्वा श्रीमाया कमला पुनः ॥ ८

महालक्ष्मी(क्ष्मि) नमः प्रोक्तो मन्त्रः षड्विंशदक्षरः ।
लिखेद्विंशतिकोष्ठेषु कमलामनुवि(त्) क्रमात् ॥ ९

बहिः शूलेषु षड्बीजं लिखेन्मन्त्रं धनप्रदम् ।
पुरश्चर्यार्ण——(साहस्रं) शीघ्रसिद्धिप्रदं भवेत् ॥ १०

भृगुः श्रीवासुदेवस्य ऋषिश्छन्दस्तु पूर्ववत् ।
मायया च श्रिया कुर्याद्बीजशक्तिः(क्ती) महेश्वरि ॥ ११

हृदयं न्यस्य बीजाभ्यां मूर्ध्नि श्रीबीजयुग्मतः ।
(बीजाभ्यां हृदि विन्यस्य मूर्ध्नि श्रीबीजयुग्मतः)
लक्ष्मीं प्रोक्त्वा शिखा वर्म वासुदेवाय कीर्तितम् ॥ १२

नमसाऽस्त्रं विनिर्दिष्टं सर्वं तारादिकं न्यसेत् ।
विद्युच्चन्द्र (विद्युत्पुञ्ज) निभं वपुः कमलजावैकुण्ठयोरङ्कतां
प्राप्तं स्नेहवशेन रत्नविलसद्भूषादिभिर्भूषितम् ॥
विद्यापुस्तकदर्प(दाम)वान् (वन्) मणिमयं (कुम्भं) सरोजं गदां
शंखं चक्रममूनि बिभ्रदमितां दद्याच्छ्रियं नः सदा ?) १३

एवं ध्यात्वा जपेन्मन्त्रं सम्पद्ज्ञानप्रसिद्धये ।
हृल्लेखाबीजयुगलं रमाबीजयुगं पुनः ॥ १४

श्रीवासुदेवाय नमो द्वादशार्णो मनुः स्मृतः ।
लक्षं मन्त्रजपः प्रोक्तो दशांशं जुहुयात्ततः ॥ १५

पद्मैः कुर्याद्द्विकसितैर्मधुत्रितयसंयुतैः ।
वेदाष्टपत्रविलसन्मनुवर्णमेकं
पश्चात्कलाधरणिबिम्बयुगे च लक्ष्मीः ।
एवं लिखेदखिलसम्पदवाप्तिहेतुं
श्रीवासुदेवमयमब्जधरानिवासम् ॥ १६

इति श्रीमहालक्ष्मीकल्पे नारायणब्रह्मोमामहेश्वर-
संवादे प्रत्यक्षसिद्धिप्रदे महालक्ष्मी -
रत्न (कल्प) कोशाख्ये षट् -
चत्वारिंशोऽध्यायः ॥

## ॥ सप्तचत्वारिंशोऽध्यायः ॥

ऋषिर्ब्रह्मा जगद्योन्याश्छन्दो गायत्रमुच्यते ।
देवता श्रीजगद्योनिर्बीजं वागर्भ(वाग्भव) मुच्यते ॥ १

वा(का)मेन परया शक्तिः कीलकं च यथाक्रमात् ।
पञ्चवीजेन पञ्चाङ्गं कुर्याद्देवि विचक्षणः ॥ २

बालार्कद्युतिमिन्दुखण्डविलसत्कोटीरहारोज्वलां
रक्ता(त्ना)कल्पविभूषितां कुचनतां षड्भिः करैर्मञ्जरीम् ।
पद्मे कौस्तुभमुत्पलं वितरणं संबिभ्रतीं सुस्मितां
फुल्लाम्भोरुहलोचनत्रययुतां वन्दे परां देवताम् ॥ ३

एवं ध्यात्वा जपेन्मन्त्रं सर्वकामार्थसिद्धये ।
वाग्भवं भुवनेशीं च कमलां च मनोभवम् ॥ ४

सौस्तारं च जगन्मात्रे नमोऽन्तं मन्त्रमुद्धरेत् ।
वाक्प्रवृत्तिकरं सद्यः सर्वैश्वर्यप्रदायकम् ॥ ५

किमत्र बहुनोक्तेन सर्वसिद्धिप्रवर्तकम् ।
तिर्यगूर्ध्वं लिखेद्वेदपञ्चरेखाः सुरेश्वरि ॥ ६

लिखेद् द्वादश कोष्ठेषु द्वादशार्णमनुक्रमात् ।
साध्यनाम बहिः शूलेष्वखिलेत्(ष्वालिखेत्) कर्मसंयुतम् ॥ ७

षट्कर्माणि प्रसिध्यन्ति धारणात् सर्वसम्पदः ॥

श्रीसङ्कर्ष(ण) मन्त्रस्य देवेशी ऋषिरीरितः ॥ ८

छन्दो गायत्रमाख्यातं देवता भगवान् हरिः ।
श्रीं बीजं ह्रीं ततः शक्तिः नमः कीलकमुच्यते ९

सां श्रामिति संप्रोक्त्वा षडङ्गं विन्यसेत्क्रमात् ।
पीताभं पीतवसनं शङ्खचक्रगदाऽभयम् ॥ १०

संकर्षणं महाविष्णुं ध्यायेत्सम्पत्समृद्धये
मायां श्रियं तथा मायां श्रीसंप्रोक्त्वा तु तत्परम् ॥ ११

सङ्कर्षणाय नम श्रीमद्द्वादशार्णो मनुर्भवेत् ।
शीघ्रसिद्धिप्रदं देवि किमत्रबहुनोक्ततः । १२

पुनरन्यं प्रवक्ष्यामि संकर्षणमहामनुम् ।
नामोन्नमो भगवते ततः सङ्कर्षणाय च ॥ १३

विश्वात्मने ततः पश्चात् अभीष्टं वर तत्परम् ।
संक्रामयद्वयं पश्चात् स्वाहान्तो मन्त्र उच्यते ॥ १४

महावीर्यमिदं श्रेष्ठं सर्वसङ्क्रमसिद्धिदम् ।
गर्भसत्वविषप्राणमुखसङ्क्रामदं परम् ॥ १५

द्वात्रिंशत्कोष्ठके यन्त्रे रेखाशूलाग्रसाध्यके ।
कोष्ठमूले मनुं लिख्य शूले साध्यादिकर्म च ॥ १६

सङ्क्रामणकरं यन्त्रं धनसौभाग्यवृद्धिदम् ॥ १६ १/२

इति श्रीमहालक्ष्मीकल्पे नारायणब्रह्मोमामहेश्वर-
संवादे प्रत्यक्षसिद्धिप्रदे महालक्ष्मी -
रत्न (कल्प) कोशाख्ये सप्त -
चत्वारिंशोऽध्यायः ॥

## ॥ अष्टचत्वारिंशोऽध्यायः ॥

ऋषिर्ब्रह्मा रमायास्तु छन्दो गायत्रमुच्यते ।
देवता स्याद्रमा देवी(देवि) श्रीस्वाहा बीजशक्तिके ॥ १

श्रामित्यादिषडङ्गं स्यात् ध्यायेद्देवीं समाहितः ।
तडित्प्रभां परां पूर्णां ताटङ्कयुगमण्डिताम् ॥ २

पद्महस्तां च वामोरुसंस्थां पत्युः सदा भजे ।
श्रीमोन्नमो भगवति सर्वसौभाग्यदायिनि ॥ ३

श्रीं श्रीविद्येति संप्रोक्त्वा महापश्चात् विभूतये ।
स्वाहान्तको मनुरयं सर्वसम्प्रत्प्रदायकः ॥ ४

होमे तु पायसं लाजमाज्यं दूर्वारमासुमम् ॥ ४ १/२

मध्ये स्वाहाष्टपत्रे प्रतिदलयुगलं वर्णमालिख्य वा...
शिष्टान्वर्णान् दशारे क्षति(वसु) पुट भवनेष्वष्ट बीजं तु लक्ष्म्याः ।
वाह्ये पञ्चाशदर्णं प्रणवपरिवृतं स्वे(स्वे)ष्ट साध्यं स...
लक्ष्मीयन्त्रं तदेतत् त्रिभुवनविभवश्रीप्रदं दिव्यदिव्य... ॥ ५ १/२

इन्द्रः प्रद्युम्नमन्त्रस्य ऋषिरग्निश्च सुन्दरि ॥
छन्दो गायत्रमाख्यातं प्रद्युम्नो देवता हरिः ॥ ६ १/२

श्रीशक्ती वीजशक्ती स्यात् षडङ्गं संप्रकीर्तितम् । ७

शङ्खं चक्रमथाब्जपाणिकमलं नीलोत्पलश्यामलं,
नानारत्नकिरीटकुण्डल सत्कु(लसत)केयूरहारान्वितम् ।
वन्दे दिव्यसुमानुलेपकलितं वामाङ्कलग्नश्रियं
भक्ताभीष्टवरप्रदाननिरतं प्रद्युम्नसंज्ञं हरिम् ॥ ८

ओं नमो भगवते रमेशाय ततः परम् ।
प्रद्युम्नाय पदं प्रोक्त्वा ततः सर्वसमृद्धये ॥ ९

वह्निजायायुतं मन्त्रं चतुर्विंशतिवर्णकम् ।
प्रजपेदक्षरशतं संगं(साङ्गं) सर्वार्थसिद्धये ॥ १०

रमाप्रयोगवद्धोमे द्विजभुक्तिर्विशेषतः ।
चतुर्विंशतिकोष्ठेषु लिखेन्मन्त्रं यथाक्रमम् ॥ ११
साध्यं लिखेत् त्रिकोणे(शूले)षु सर्वसम्पत्तिकारणम् ॥ ११ १/२

इति श्रीमहालक्ष्मीकल्पे नारायणब्रह्मोमामहेश्वर-
संवादे प्रत्यक्षसिद्धिप्रदे महालक्ष्मी -
रत्न (कल्प) कोशाख्ये अष्ट -
चत्वारिंशोऽध्यायः ॥

## ॥ एकोनपञ्चाशोऽध्यायः ॥

वसुदायास्तु मन्त्रस्य मङ्कणो भगवानृषिः ।
गायत्रं छन्द इत्युक्तं वसुदा देवता मता ॥ १

श्रीं बीजमाहुतिः शक्तिः योगः सर्वार्थसिद्धये ।
श्रामित्यादिकरन्यासमङ्गन्यासं चरेत्क्रमात् ॥ २

वसुपात्रं तथा पद्मं धारयन्तीं तथाऽभयम् ।
ग्री(ग्रै) वेयाङ्गदभूषढ्यां वसुदां वरदां भजे ॥ ३

वेदादिं च रमाबीजं वसुदेति ततः परम् ।
वसुधारे वसुकरि धनकारिपदं ततः ॥ ४

पदं धान्यकरि रत्नकारि स्वाहा सतारकम् ।
सप्तविंशतिको मन्त्रः सर्वैश्वर्यप्रदायकः ॥ ५

लक्षमात्रं जपेन्मन्त्रं मन्त्रसिद्धिर्भवेद् ध्रुवम् । ५ १/२

तिर्यगूर्ध्वचतुर्दशरेखा-
मध्यतोऽथ विलिखेन्मनुवर्णान् ।
साध्यनामलिपिसंयुतमेत-
त्सर्वभाग्यफलदं धनदं च ॥ ६ १/२

पुनरन्यं महामन्त्रं वक्ष्यामि तव शोभने । ७

ऋष्यादिकं यथा पूर्वं श्रामित्यादिषडङ्गकम् ॥
ध्यानं पूर्ववदाख्यातं मन्त्रभेदं वदाम्यहम् ॥ ८

श्रीं श्रियै नमसा युक्तः पञ्चवर्णश्च मन्त्रराट् ।
पञ्चलक्षं जपेद्विद्यां साक्षाद्वैश्रवणो भवेत् । ९

अथानु(नि) रुद्धमन्त्रस्य भगवान् मङ्कणो ऋषिः ।
छन्दो गायत्रमाख्यातमग्नि(नि) रुद्धस्तु देवता ॥ १०

तारं बीजं च श्रीं शक्तिः ह्रीं कीलकमी(मुदी)रितम् ।
श्रामित्यादि षडङ्गं स्यात् ध्यानं वच्मि तवानघे । ११

इन्द्रनीलमणिश्यामं शङ्खं चक्रं गदां तथा ।
शार्ङ्गं च धारयन्तं तमनिरुद्धं हरिं परम्(भजे) ॥ १२

तारं श्रियं तथा मायां मदनं ब्लूं श्रियं तथा ।
अनिरुद्धपदं प्रोक्त्वा श्रीबीजानि विलोमतः ॥ १३

षोडशार्णमयं मन्त्रं शीघ्रसिद्धिप्रदायकम् ।
लक्षं जपेन्मन्त्रसिध्यै विद्वान् साधकपुङ्गवः ॥ १४

लिखेत् षोडशकोष्ठेषु बाह्ये साध्यादि कर्म च ।
अनिरुद्धमहाचक्रं धारणात्पुत्रभाग्यदम् ॥ १५

किमत्र बहुनोक्तेन सर्वैश्वर्यप्रदायकम् ॥ १५.१/२

इति श्रीमहालक्ष्मीकल्पे नारायणब्रह्मोमामहेश्वर-
संवादे प्रत्यक्षसिद्धिप्रदे महालक्ष्मी -
रत्न (कल्प) कोशाख्ये एकोन -
पञ्चाशोऽध्यायः ॥

## ॥ पञ्चाशोऽध्यायः ॥

स्वर्णदायास्तु मन्त्रस्य स्वच्छन्दवरको(भैरवो) मुनिः ।
छन्दो गायत्रमेव स्यात् स्वर्णदा देवता सदा ॥ १

श्रां क्लां सामित्यादिविन्यासं ध्यायेद्देवीं महेश्वरीम् । १ १/२

हेमकुम्भमम्बुजं च धारिणीं वराभयौ -
भूषितां(वि) भूषणैः सुवर्णकान्तिभासिनीम् ।
हासिनीं विलासिनीं विभूतिदासदायिनीं
भावयामि स्वर्णदां महासुवर्णभैरवीम् ॥ २ १/२

एवं ध्यात्वा जपेन्मन्त्रं स्वर्णसिद्ध्(ध्यै) वरानने ३

श्रीं क्लीं श्रीं स्वर्णदायै नमः श्रीं क्लीं श्रीमितीरयेत् ।
चतुर्विंशतिसाहस्रं जपेन्मन्त्रस्य सिद्धये ॥ ४

स्वर्णदा(याः) प्रसादेन स्वर्णसिद्धिं समश्नुते ।
लिखेद्द्वादशकोष्ठेषु द्वादशार्णं वरानने ॥ ५

वह्निः शूले साध्यकर्म स्वर्णसिध्यै महेश्वरि ।
स्वर्णाकर्षणमन्त्रस्य स्वच्छरा(स्वच्छन्द)वटुको मुनिः । ६

छन्दोऽतिजगती प्रोक्तो(क्तं) देवता स्वर्णदायकः ।
स्वांबीजमाहुतिः शक्तिः योगः स्वर्णसमृद्धये ॥ ७

स्वामित्यादिषडङ्गं स्यात् ध्यानं वच्मि श्रृणु प्रिये । ७ १/२

रक्ताभं सुप्रसन्नं शशिकलविलसद्बद्धपिङ्गक्तं दर्प(पिङ्गाभजूटं)
पद्मं पीयूषकुम्भं नवमणिविलसच्छंङ्खदानाभयाद्यम् ।
देव्या संश्लिष्टपार्श्वं कनकमयघटं धारयन्त्याऽऽदिशक्त्या
भक्ताभीष्टार्थदानप्रथितगुणगणं वैभवं नौमि नित्यम् ॥ ८ १/२

एवं ध्यात्वा जपेन्मन्त्रं स्वर्णसिध्यै(ध्ये)ककारणम् । ९

बीजाभ्यां पुटितं लक्ष्म्याः कामं प्रणवमप्यथ ।
नमो भगवते स्वर्णाकर्षणेति वदेत्ततः ॥ १०

भैरवाय पदं प्रोक्त्वा प्रणताभीष्टतत्परम् ।
पूरणाय ततो ह्येहियुग्मं च करुणानिधे ॥ ११

मह्यं हिरण्यसिद्धिं च दापयद्वयमप्यथ ।
शीघ्रं दाप(य) श्रीं क्लीं श्रीं स्वाहान्तो मन्त्र ईरितः ॥ १२

एकषष्ट्यक्षरं मन्त्रं लघुसिद्धिप्रदायकम् ।
एकषष्टिशतं कुर्याज्जपं मन्त्रस्य सिद्धये ॥ १३

साङ्गे कृते जपे तस्य स्वर्णाकर्षणभैरवः ।
प्रसन्नस्तनुते स्वर्णराशिमक्षयमञ्जसा ॥ १४

अष्टोत्तरशतं नित्यं यःपठेत्साधकोत्तमः ।
सहसा लभते स्वर्णं सोऽन्वहं देव्यहेतुकम् ॥ १५

लिखेदष्टदलं पद्मं कर्णिकाकेसरोज्ज्वलम् ।
कलादलं च वा(द्वा) त्रिंशद्दलं भूमिपुरं बहिः ॥ १६

श्रीवीजं मध्यतो लिख्य भूम्यन्तं मूलमालिखेत् ।
द्वात्रिंशद्दलपर्यन्तं भूपुरे चतुरक्षरम् । १७

श्रीवीजैश्च समग्रं वै कुर्याद्यन्त्रं सुरेश्वरि ।
एतत्परमकल्याणकारणं स्वर्णसिद्धिदम् ॥ १८

सर्वसम्पत्प्रदं देवि नृणां सौभाग्यदायकम् ।
पुनरन्यं प्रवक्ष्यामि स्वर्णाकर्षणकं मनुम् ॥ १९

अथास्य मन्त्रराजस्य दुर्वा सो(सा) भगवानृषिः ।
छन्दोऽतिजगती प्रोक्ता देवता स्वर्णभैरवः ॥ २०

प्रणवं वीजमित्याहुः स्वाहा शक्तिर्मनीषिण(णि) ।
स्वर्णाकर्षणसिध्यर्थे विनियोगो वरानने ॥ २१

ओं पं आंशमिति प्रोक्त्वा(?) षट्पदैश्च षडङ्गकम् । २१ १/२

चिन्तारत्नफलस्य कल्पकतरोर्मूले सुसिह्मासने
देव्यालिङ्गितवामभागलसितो ढक्कां त्रिशूलं वरम्
भक्ताभीष्ट फलान्न([1]ग्नि) पात्र ह(भ)रितं स्वर्णं दधानं करैः
स्वर्णाकर्षणभैरवो विजयते स्वर्गापवर्गप्रदः ॥ २२ १/२

ओं श्रीं ह्रीं क्लीं तथा ऐं आं वं ह्रीं ह्रीं तथैव ह्रौं । २३

महाभैरवाय तथा आपदुद्धारणाय च ॥
अज (जा) मिलपदं वन्धनाय लोकेश्वराय च ॥ २४

---

1. अग्निपात्रं स्वर्णपात्रमित्यर्थः। [illegible] "पात्रं डमरुं त्रिशूल" मिति स्वर्णाकर्षण भैरवध्यानान्तरेऽपि तस्य स्वर्णपात्रधारणस्य उक्तत्वात् ॥

स्वर्णाकर्षपदं प्रोक्त्वा णाय प्रोक्त्वा ममेति च ।
दारिद्र्यापहारायेति ह्रां ह्रूं ह्रीं आं ह्रां वं च आमिति ॥ २५

ॐ ऐं क्लीं ह्रां तु संप्रोक्त्वा श्रीं स्वाहेति मनुर्भवेत् ।
अयं मंत्रश्चभ्रूणां चिंतामवा स्मृतः ॥
(अयं मन्त्रश्च सुभ्रूणां चिन्तामणिरिव स्मृतः) २६

पुनरन्यं प्रवक्ष्यामि स्वर्णभैरवमन्त्रकम् ।
पूर्ववदृष्टि संप्रोक्ता छंदेति जगति स्मृता ॥
(पूर्ववदृषिराख्यातश्छन्दोऽतिजगती स्मृता) २७

देवता कनकाख्यस्तु भैरवः परिकीर्तितः ।
ह्रीं वीजं(जं) वह्नि दा(जा) या तु शक्तिर्योगोथ(ऽर्थ) सिद्धये ॥ २८

ह्रांदि(मि)त्यादि षडङ्गं स्यात् षट्पदैर्भुवनेश्वरी(रि) ॥
सूर्यकोटि प्रतीकाशं कुबेरनिलयं महत् ॥ २९

नेत्रत्रयं चतुर्वाहुं पाशाङ्कुशविरा... ॥
वराभयं शशीखण्डं स्वर्णाभरण भूषितम् ॥ ३०

सर्वाभरणसंपूर्णं शोभितं स्वर्णभैरवम् ।
ओं वं आं ह्रीं यौच्च(प्रोच्य)ह्रीं ह्रौं च महाभैरपदं वदेत् । ३१

...यापदुद्धारणाय अजामिल पदं वदेत् ।
...धनाय तथा लोकेश्वराय पदमुद्धरेत् ॥ ३२

स्वर्णाकर्षणाय मम दारिद्र्यापहराय च ।
ह्रां ह्रीं ह्रौं आं तथा प्रोक्त्वा स्वाहान्ते(न्ते)मन्त्र उच्यते ॥ ३३

पुरश्चर्या दर्णशतं चम्पकैर्होम ईरितः ।
उभयोर्मन्त्रयोर्देवि समानं परिकीर्तितम् ॥ ३४

भो(भौ)मवारे विशेषेण स्वर्णाकर्षणभैरवम् ।
रक्तगन्धैश्च पुष्पैश्च पूजयेद्यदि साधकः ॥ ३५

सर्वसिद्धिं समाश्रित्य भाति वैश्रवणोपमः ॥
स्वर्णाकर्षणदेवस्य मालामन्त्रं प्रवच्मि ते ॥ ३६

तारं नमो भगवते स्वर्णाकर्षण संवदेत् ।
भैरवायातितीक्ष्णदंष्ट्राय परमन्त्र च ॥ ३७

पर यन्त्र पर तन्त्र छेदनाय पदं वदेत् ।
परविद्यास्तम्भनाय सर्वराजवशंकर । ३८

वशीकरणायपदं सर्वराजवशंकर ।
णाय इच्छाकर्षणाय ततः सर्वपदं वदेत् ॥ ३९

र(दु)ष्टान्तकाय सर्वं च तथा संहरणाय च ।
सर्वकाम सामर वर्जिताय तथा वदेत् ।
(सर्वकामप्रदायामरवन्दिताय तथा वदेत् ॥) ४०

ओं ह्रीं श्रीं क्लीं तथा क्लीं प्रें ओं स्फ्रें हुं फट् च संवदेत् ।
वह्निजायासमायुक्तो मालामन्त्रोऽर्थसिद्धिदः ॥ ४१

(सखट्वाङ्ग) खट्वाङ्गासिपर्णिं च पानपात्राभयं तथा ।
नागाभरणभूपं च (चाप्य) अनन्त सुखरूपिणी(णम्) ॥ ४२

नवीनाभां सदानन्दां सर्वदेवनमस्कृताम् ।
एवं ध्यात्वा जपेन्मन्त्रमिष्टार्थफलसिद्धये ॥ ४३

सर्वसिद्धिर्भवेद्देवि साधकस्य न संशयः ॥

इति श्रीमहालक्ष्मीकल्पे नारायणब्रह्ममहेश्वर-
संवादे प्रत्यक्षसिद्धिप्रदे महालक्ष्मी-
रत्न (कल्प) कोशाख्ये
पञ्चाशोऽध्यायः ॥

॥ पूर्वभागः समाप्तः ॥